# SANGITA-DARPANA,

OR

# THE MIRROR OF MUSIC

BY

## DÁMODARA MISRA:

EDITED WITH NOTES

AND PUBLISHED BY

RAJAH SOURINDRO MOHUN TAGORE, MUS. DOC.,
F. R. S. L., M. R. A. S.,

**Companion of the Order of the Indian Empire;**
KNIGHT COMMANDER OF THE ORDER OF LEOPOLD, BELGIUM;
OF THE FIRST CLASS OF THE ORDER OF ALBERT, SAXONY;
AND OF THE MOST EXALTED ORDER OF FRANCIS JOSEPH, AUSTRIA;
CHEVALIER OF THE ROYAL PORTUGUESE MILITARY ORDER OF CHRIST,
AND OF THE SECOND CLASS OF THE IMPERIAL ORDER OF MEDJIDIE, TURKEY;
FRANC CHEVALIER OF THE ORDER OF THE KNIGHTS OF THE HOLY SAVIOUR
OF MONT REAL, JERUSALEM, RHODES, AND MALTA;
KNIGHT OF THE GURKHA STAR OF SARASVATI, NEPAUL;
OF THE ORDER OF BABABAMALA, SIAM;
AND OF THE FIRST CLASS OF THE IMPERIAL ORDER OF THE "PAOU SING,"
OR "PRECIOUS STAR," CHINA;
KNIGHT OF HONOR OF THE ORDER OF CABALLEROS HOSPITALAROS, SPAIN;
CAVALIERE D'ONORE OF AREOPAGO DEI DECORATI DI TUTTE LE NAZIONI,
LIVORNO; HIGH PROTECTOR OF THE WHITE CROSS OF THE HUMANITARIAN
ACADEMY, LEGHORN;
HONORARY KNIGHT OF THE ORDER OF SAVIOURS OF THE MARITIME ALPS;
KNIGHT OF HONOR OF HER HIGHNESS MARY OF LUSIGNAN,
PRINCESS ROYAL OF CYPRUS, OF JERUSALEM, AND OF ARMENIA;
KNIGHT OF THE IMPERIAL HIGH PERSIAN ORDER OF LION AND SUN;
CHEVALIER OF THE ACADEMIC ORDER OF BUENOS-AYRES, SOUTH AMERICA;
FOUNDER AND PRESIDENT, BENGAL MUSIC SCHOOL, CALCUTTA;
SANGITA-NAYAKA AND SANGITA-SILPA-VIDYA-SAGARA OF NEPAUL;
HONORARY MAGISTRATE & MAGISTRATE OF POLICE IN THE TOWN OF CALCUTTA;
JUSTICE OF THE PEACE FOR THE TOWN OF CALCUTTA;
FELLOW OF THE UNIVERSITY OF CALCUTTA;
HONORARY MEMBER OF THE ROYAL ASIATIC SOCIETY, CEYLON;
AND OF THE STRAITS BRANCH, MALAYA;
CORRESPONDING MEMBER OF THE SOCIETY OF ARTS AND SCIENCES, JAVA;
&c., &c., &c., &c.

## PART I.

**Calcutta:**
65, PATHURIAGHAT STREET.
1881.

DEDICATED

BY PERMISSION

TO

The Illustrious Prof. Dr. A. Weber,

BY

HIS OBLIGED SERVANT,

S. M. TAGORE.

# संगीतदर्पणम्।

ओं नमो गणेशाय।

## प्रथमोऽध्यायः।



प्रणम्य शिरसा देवौ पितामहमहेश्वरौ।
सङ्गीतशास्त्रसंक्षेपः सारतोऽयं मयोच्यते॥ १॥

---

मङ्गलाचरणम्।

इन्दिराहृदयानन्दमुकुन्दचरणौ स्मरन्।
सङ्गीतदर्पणव्याख्यामारभे मलहारिणीम्॥
अनया मलहारिण्या दर्पणे विशदीकृते।
सुखेन सन्तः पश्यन्तु पदार्थान् प्रतिबिम्बितान्॥

इह खल्वालोडितसकलशास्त्ररत्नाकरः सहृदयहृदयानन्दसन्दोहकरः दुर्लभसङ्गीततत्त्वावबोधजनकजन्मनिखिललोकादरः श्रीमद्दामोदरः सङ्गीतदर्पणं नाम सङ्गीतग्रन्थं चिकीर्षुः प्रारीप्सितार्थाविघ्नपरिसमाप्तिकामोऽविगीतशिष्टाचारपरिपालनमनुरुन्धानः प्रथमं सकलविघ्नविघातकं विनायकं प्रणम्य सर्वाराध्यतया जगत्पित्रोर्नमस्काररूपं मङ्गलमाचरति, प्रणम्येति। मया पितामहमहेश्वरौ ब्रह्मशङ्करौ देवौ, शिरसा मूर्ध्ना, प्रणम्य अभिवाद्य, सङ्गीतशास्त्रस्य संक्षेपः सङ्गीतदर्पणाख्योऽयं ग्रन्थः, सारतः स्थिरांशतः, सारो बले स्थिरांशे चेत्यमरः, अतिविस्तृतमसारांशं विहायेत्यर्थः, उच्यते। संक्षिप्तः सारांशात्मकः प्रबन्धः स्वल्पकालेन सङ्गीतरहस्यबुभुत्सूनां महते उपकाराय भविष्यतीत्यभिप्रायः। ग्रन्थस्य शब्दार्थात्मकत्वात्, शब्दो-ब्रह्मेत्यनेन ब्रह्मणः शब्दरूपत्वात्, अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखर-इत्यनेन शङ्करस्यार्थरूपधरत्वाच्च, युक्ततरैव तयोः प्रणामरूपं मङ्गलाचरणं ग्रन्थादौ। अत्र सुरज्येष्ठत्वादादौ पितामहनिर्देशः। १।

भरतादिमतं सर्व्वमालोच्यातिप्रयत्नतः ।
श्रीमहामोदराखेन सज्जनानन्दहेतुना ।
प्रचरद्रूपसङ्गीतसारोद्धारोविधीयते ॥ २ ॥
गीतं वाद्यं नर्त्तनञ्च त्रयं सङ्गीतमुच्यते ।
मार्गदेशीविभागेन सङ्गीतं द्विविधं मतम् ॥ ३ ॥
द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ।
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ॥ ४ ॥

---

भरतेति ।—भरतादिमतं भरतादीनां सङ्गीतशास्त्रप्रवर्त्तकानाम् अभिप्रायं, आदिशब्दात् कश्यपमतङ्गपार्ष्णि प्रभृतयो गृह्यन्ते, तत्र प्राधान्येनादौ भरतनिर्द्देशः । अतिप्रयत्नतः अतिशयितेन अनुसन्धानेन, आलोच्य मथित्वा निपुणं समालोच्येति यावत्, सज्जनानन्दहेतुना सहृदयप्रमोदजनकेन श्रीमहामोदराखेन मयेति शेषः, प्रचरद्रूपाणां भूयिष्ठं प्रचलितानां सङ्गीतानां सारोद्धारः सारनिष्कर्षः, विधीयते यथाशास्त्रं क्रियते । २ ।

अथ किं तत्सङ्गीतमित्याह, गीतमिति ।—गीतं वाद्यं नर्त्तनं नृत्यञ्च इति त्रयं सङ्गीतम् उच्यते कथ्यते । ननु समुदितानामेव सङ्गीतत्वं नतु व्यस्तानाम् इति न शङ्कनीयं, सङ्गीतशब्देन एकैकस्यापि बोधनात् । एतेषां नृत्यवाद्यगीतानाम् उत्तरोत्तरमुपादेयत्वं तद्यथा ;—नृत्यं वाद्यानुगं वाद्यञ्च गीतानुगमिति गीतस्यैव प्रधानत्वम् । एतदुत्पत्तिर्वेदेभ्यो यथा ;—ऋग्भिः पाठ्यमभूद्गीतं सामभ्यः समपद्यत । यजुर्भ्योऽभिनया जाता रसाश्चाथर्व्वणः स्मृताः । इति । तस्य द्वैविध्यमाह, मार्गेति । मार्गो देशी चेति सङ्गीतं द्विविधमित्यर्थः । ३ ।

मार्गस्य लक्षणं कथयति, द्रुहिणेनेति ।—द्रुहिणेन ब्रह्मणा यत् अन्विष्टं मार्गितं, यच्च भरतेन महर्षिणा महादेवस्य पुरतः अग्रे, प्रयुक्तम् अभिनीतं, तद्विमुक्तिदं सर्व्वदुःखोपशमकारि, मार्गाख्यं मार्गनामकं, सङ्गीतमुच्यत इति शेषः । ४ ।

देशीलक्षणं कथयति, तत्तदिति ।—तत्तद्देशस्थया तत्र तत्र देशे प्रचलि-तया, रीत्या प्रथया, यस्मिन् देशे यादृशी रीतिः प्रचलिता तादृशीं रीति-

तत्तद्देशस्थया रीत्या यत्स्याल्लोकानुरञ्जनम् ।
देशे देशे तु सङ्गीतं तद्देशीत्यभिधीयते ॥ ५ ॥
गीतवादित्रनृत्यानां रक्तिः साधारणो गुणः ।
अतो रक्तिविहीनं यन्न तत् सङ्गीतमुच्यते ॥ ६ ॥

## अथ रागोत्पादनकारणानि ।

शारीरं नादसंभूतिः स्थानानि श्रुतयस्तथा ।
ततः शुद्धाः स्वराः सप्त विकृता द्वादशाऽप्यमी ॥ ७ ॥
वाद्यादिभेदाश्चत्वारो रागोत्पादनहेतवः ॥ ८ ॥

## अथ वक्तव्यपदार्थाः ।

कुलानि जातयो वर्णा द्वीपान्यार्षञ्च दैवतम् ।
छन्दांसि विनियोगाश्च स्वराणां श्रुतिजातयः ॥ ९ ॥

---

मनुसृत्येत्यर्थः, यत्सङ्गीतं लोकानुरञ्जकं तत्तद्देशवासिनां हृदयहारि, तद्देशीत्यन्वयः। देशीशब्दस्य व्युत्पत्तिमाह, देश इति। देशे देशे अस्य प्रवर्त्तनादिति शेषः, तत्सङ्गीतं देशीति अभिधीयते देशीति संज्ञया कथ्यते ।५।

गीतेति ।—रक्तिः रञ्जनं जनमनोहरणमिति यावत्, गीतवादित्रनृत्यानां साधारणो गीतादित्रयवृत्तिको गुणः धर्म्मः, अतः कारणात् यत् रक्तिविहीनं रञ्जनगुणविरहितं, यत्र चित्तानुरञ्जकत्वं नास्तीत्यर्थः, तत् सङ्गीतं न उच्यते सङ्गीतशब्देन नाभिधीयते। येन गीतादिना चित्तानुरञ्जनं न भवति न खलु तत् गीतादिपदवाच्यमिति जनमनोरञ्जनमेव सारभूततया सङ्गीतस्य जीवनाधायको धर्म्म इति भावः । ६ ।

शारीरमिति ।—शारीरं नादोत्पत्त्याश्रयं, नादसम्भूतिः नादोत्पत्तिप्रकारः, स्थानानि हृदादीनि, श्रुतयः श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः, अन्यत् सुगमं । ७ । ८ ।

कुलानीत्यादि ।—कुलादीनां लक्षणादीनि तत्तत्प्रकरणेषु वक्ष्यामि। स्वराणामित्यनेन कुलानीत्यादीनामन्वयः कार्य्यः । ९ ।

ग्रामाश्च मूर्च्छनातानाः शुद्धाः कूटाश्च सङ्ख्यया ।
प्रस्तारः खण्डमेरुश्च नष्टोद्दिष्टप्रबोधकः ॥ १० ॥
स्वरसाधारणं जातिसाधारणमतःपरम् ।
काकल्यन्तरयोः सम्यक् प्रयोगोवर्णलक्षणम् ॥ ११ ॥
त्रिषष्टिरप्यलङ्काराजातयोदशविधस्ततः ।
जातिलक्ष्म ग्रहांशादिभेदान् वक्ष्यामहे क्रमात् ॥ १२ ॥
गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।
तद्द्वयानुगतं नृत्यं नादाधीनमतस्त्रयम् ॥ १३ ॥

---

ग्रामाश्चेति ।—ग्रामोनाम षड्जाद्यपरनामकः स्वरसङ्घातभेदः, मूर्च्छना स्वरारोहावरोहक्रमविशेषः, तानो नाम स्वरान्तरप्रवर्त्तको रागस्थिति-प्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूत स्वरविशेषः, तानस्वंश-स्वरोमत इत्यभिनवगुप्तः । जातिलक्ष्म जातीनां लक्षणम्, तच्च चयोदश-विधं, यथा—ग्रहः, अंशः, तारः, मन्द्रः, न्यासः, अपन्यासः, संन्यासः, विन्यासः, बहुत्वं, अल्पता, अन्तरमार्गः, षाड़वं, औड़वितं चेति । अन्यत् सुगमं । १० । ११ । १२ ।

एवं वस्तुसंग्रहमभिधाय नादाभिव्यक्तेराश्रयं शारीरं कथयितुं प्रथमं नादमुपश्लोकयन्नाह, गीतमिति ।—नादएव आत्मा सारभूततया बोधका-धायको यस्य तत् नादात्मकं नादस्वरूपमित्यर्थः, गीतमित्यस्य विशेषणम् । वाद्यं वीणादिवादनम्, नादव्यक्त्या नादस्य अभिव्यञ्जनेन प्रशस्यते उत्कर्षपद-वीमारोहति, शोभातिशयं पुष्णातीत्यर्थः । नृत्यं तद्द्वयानुगतं गीतवाद्यानुगतं, यदुक्तं सङ्गीतरत्नाकरे, नृत्यं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवर्त्ति चेति । अतः कारणात् त्रयं गीतवाद्यनृत्यरूपं, नादाधीनं नादापेक्षं, नादमवलम्ब्य वर्त्तत इति भावः । १३ ।

पुनः श्लोकान्तरेण नादं स्तौति नादेनेति ।—नादेन व्यज्यते वर्णः कका-रादिकः व्यज्यते स्फुटोभवति, वर्णात् पदं प्रयोगार्हानन्वितैकार्थबोधकवर्ण-समुदायः, पदाद् वचः योग्यताकाङ्क्षासत्तिविशिष्टपदसमुदायः, वचसंच व्यज्यते

नादेन व्यज्यते वर्णः पदं वर्णात् पदाद्वचः ।
वचसो व्यवहारोऽयं नादाधीनमतो जगत् ॥ १४ ॥
आहतोऽनाहतश्चेति द्विधा नादो निगद्यते ।
सोऽयं प्रकाश्यते पिण्डे तस्मात् पिण्डोऽभिधीयते ॥ १५ ॥

---

इत्यनेन सम्बन्धः, वचसः वाक्यात् अयं परिदृश्यमानः व्यवहारः लोकयात्रा, तथा चोक्तं काव्यादर्शे,—इह शिष्टानुशिष्टानां शिष्टानामपि सर्व्वथा । वाचामेव प्रसादेन लोकयात्रा प्रवर्त्तते ॥ इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति । अतः पूर्व्वोक्तात् कारणात्, जगत् भुवनत्रयं, नादाधीनं नादापेक्षं, न केवलं सङ्गीतमेव अपितु सकल एव संसारः परं ब्रह्मस्वरूपिणं नादमवलम्ब्य आस्ते इति भावः । नादस्य सर्व्वाश्रयत्वे ब्रह्मस्वरूपत्वे च प्रमाणानि यथा श्रीभागवते,—सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादस्तस्माद्विन्दुसमुद्भवः ॥ नादो विन्दुश्च बीजञ्च स एव त्रिविधो मतः । भिद्यमानात् पराद्विन्दोरुभयात्मा रवोऽभवत् ॥ स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माऽभवत् परः ॥ अपिच,—समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तः प्रभवः स्वराट् । इत्यारभ्य,—ततोऽक्षरसमाम्नायमसृजद्भगवानजः । इति ।१४।

नादस्य द्वैविध्यमाह, आहत इति ।—नादः आहतः अनाहतश्च इति द्विधा द्विप्रकारः निगद्यते कथ्यते । सोऽयं आहतानाहतभेदेन द्विविधोऽपि नादः पिण्डे देहे प्रकाश्यते प्रकटीभवति । तस्मात् पिण्डे प्रकाशात्, पिण्डः अभिधीयते; पिण्ड इति नाम्ना कथ्यते ।१५।

तत्र प्रथममनाहतनादमाह, तत्रेति ।—तत्र आहतानाहतयोर्मध्ये अनाहतं नादं मुनयः ध्यानैकाग्रचित्ता योगिनः ननु प्राकृताः नरा इत्यर्थः, गुरूपदिष्टमार्गेण आचार्य्यप्रदर्शितेन पथा समुपासते समाराधयन्ति । किम्भूतमनाहतनादं मुक्तिदमिति, मुक्तिदं मोक्षप्रापकं, तथाहि, अनाहतनादस्य ब्रह्मरूपत्वात् ब्रह्मोपासनायाश्च मोक्षहेतुत्वात् अनाहतनादस्य मुक्तिप्रदत्वं

तत्राऽनाहतनादन्तु मुनयः समुपासते ।
गुरूपदिष्टमार्गेण मुक्तिदं न तु रञ्जकम् ॥ १६ ॥
स नादस्त्वाहतोलोके रञ्जकोभवभञ्जकः ।
श्रुत्यादिद्वारतस्तस्मात्तदुत्पत्तिर्निरूप्यते ॥ १७ ॥

---

ध्येयं, ननु यदि ब्रह्मस्वरूपत्वादेव नादस्य मोक्षजनकता, तर्हि मूलं ब्रह्मो-पासनरूपं विहाय नादोपासनायां किमिति मुनिभिः प्रयत्नः करणीयः, इति न वक्तव्यं, निर्गुणब्रह्मोपासनायां मानुषाणामसामर्थ्यात् नाद एव गुरूपदिष्ट-मार्गेणोपास्य इत्यर्थं पल्लवितेन । अनाहतनादं पुनः किम्भूतं, नतु रञ्जकं, अनाहतनादो न जनमनोहारीत्यर्थः परिणतमतिमुनिजनैकगम्यत्वादना-हतनादस्य न सर्व्वजनहृदयरञ्जकत्वं, अनधिगततत्त्वोऽपि विषयः न कमपि जनं रञ्जयतीति भावः । १६ ।

अनाहतनादस्य केवलं मुक्तिप्रदत्वमुक्त्वा आहतनादस्य भुक्तिमुक्तिप्रदत्वं सूचयति, स इति ।—स आहतः नादः श्रुत्यादिद्वारतः श्रुत्याद्युपायमार्गेण, आदिशब्दात् स्वरग्राममूर्च्छनातानादयो गृह्यन्ते । लोके इह जगति, रञ्जकः सर्व्वजनमनोहरः, भवभञ्जकः भवः पुनरुत्पत्तिः संसार इति यावत्, तस्य भञ्जकः जन्मजरामरणादिसंसारक्लेशनाशक इत्यर्थः, भवतीति शेषः । आहतः खलु नादः श्रुतिमूर्च्छनादिभिरुपायैः अलौकिकगानशब्दवाच्यत्वमा-पन्नः सन्नेव सहृदयहृदयेषु कमपि परमानन्दसन्दोहमुत्पादयति ; अनन्तरञ्च ब्रह्मनादस्वरूपतया कैवल्यफलं प्रददाति चेति निर्गलितार्थः । तस्मात् अस्य इहामुत्रफलोपधायकत्वादित्यर्थः, तदुत्पत्तिः तस्य उद्भवप्रकारः, निरूप्यते अनु-क्रम्याय कथ्यते । १७ ।

शारीरं वक्तुमारभमाणः प्रधानतया प्रथमं शरीरचक्राणि वक्ति, गुदेति ।—गुदलिङ्गान्तरे पायूपस्थयोर्मध्ये आधाराख्यं आधारनामकं चतु-र्दलं पत्रचतुष्टयसमन्वितं पद्माकारं चक्रं, तिष्ठतीति शेषः । चक्रमिदं द्रुत-कनकवर्णं, ब्रह्मशक्तेराधारत्वादस्य आधार इति नाम, यदुक्तं,—तदूर्द्ध्वन्तु शिखाकारा कुण्डली ब्रह्मविग्रहा । तदाद्ये हेमवर्णाभं वसवर्णचतुर्दलम् । द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥ इति । अस्ति कुण्डलिनी ब्रह्मशक्ति-

## तत्र शारीरविवेकः ।

गुदलिङ्गान्तरे चक्रमाधाराख्यचतुर्दलम् ।
स्वाधिष्ठानं लिङ्गमूले षट्पत्रं चक्रसंज्ञकम् ॥ १८ ॥
नाभौ दशदलं चक्रं मणिपूरकसंज्ञकम् ॥ १९ ॥

---

राधारपङ्कजे । आवर्त्तस्वमृजुतां नीतेयममृतप्रदा ॥ इति च । अस्य चक्रस्य विदिक्स्थिते ऐशानाग्नेयनैर्ऋत्यवायव्यरूपे दलचतुष्टये अवस्थितस्यात्मनः क्रमेण परमानन्दसहजानन्दवीरानन्दयोगानन्दलक्षणं फलचतुष्टयं भवति । एवमाधारचक्रमुक्त्वा तदूर्द्ध्वगतं स्वाधिष्ठानचक्रं कथयति, स्वाधिष्ठानमिति । लिङ्गमूले षट्पत्रं, षट् पत्राणि यस्य तत्, षड्भिर्दलैरन्वितमित्यर्थः, चक्रसंज्ञकं स्वाधिष्ठानं स्वाधिष्ठानाख्यचक्रमित्यर्थः, अस्तीति शेषः । परलिङ्गस्य स्थानभूतत्वादस्य स्वाधिष्ठानमिति नाम, तथाहि,—स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततोविदुरिति । अग्निसन्निभमिदं चक्रं मूलाधारसंज्ञयापि कथ्यते, यदुक्तं ;—तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् । वादिलान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकम् । मूलमाधारषट्कानां मूलाधारं ततो विदुरिति । अस्य चक्रस्य पूर्व्वादिषु षट्सु दलेषु अवस्थितस्यात्मनः यथाक्रमं प्रश्रयक्रूरतागर्व्वनाशमूर्च्छावज्ञाविश्वासाख्यानि षट् फलानि भवन्ति । १८ ।

एवं स्वाधिष्ठानचक्रमभिधाय तदूर्द्ध्वगतं मणिपूरचक्रमाह, नाभाविति ।— नाभौ नाभिदेशे मणिपूरकसंज्ञकं दशदलं दशभिः पत्रैरन्वितं चक्रम्, अस्तीति शेषः । अतिमहत्प्रभमिदं चक्रमादित्यस्य स्थानं, अस्य मणिवद्भिन्नपद्मत्वात् मणिपूरमिति नाम, तथाचोक्तं ;—तदूर्द्ध्वे नाभिदेशेतु मणिपूरं महत्प्रभम् । मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः । मणिवद्भिन्नतत्पद्मं मणिपूरं तथोच्यते । दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥ इति । अस्य पूर्व्वादिषु दशसु दलेषु अवस्थितस्यात्मनः यथाक्रमं सुषुप्तितृष्णेर्ष्यापिशुनतालज्जाभयघृणामोहकषायविषादरूपाणि दश फलानि भवन्ति । १९ ।

मणिपूरकमभिधाय तदूर्द्ध्वगतमनाहताख्यं चक्रं निरूपयति, हृदय इति । हृदये अनाहतं अनाहतनामकं चक्रम् अस्तीति शेषः । द्वादशभिर्दलैः युक्तम् अन्वितं तत् अनाहताख्यं चक्रमिति शेषः, महर्षिभिः ओङ्काररूपिणः

हृदयेऽनाहतं चक्रं शिवस्य प्रणवात्मनः ।
पूजास्थानं तदिच्छन्ति युतं द्वादशभिर्दलैः ॥ २० ॥
कण्ठे तु भारतीस्थानं विशुद्धिः षोडशच्छदम् ।
तत्र षड्जादयः सप्त स्वराः सम्यक् प्रभेदतः ॥ २१ ॥

---

शिवस्य पूजास्थानं ध्यानास्पदम् इच्छन्ति, योगिन इति शेषः । योगिनोऽपि अनाहतचक्रे स्थितम् ओङ्काररूपिणं परमेश्वरं ध्यात्वा अवहितेन मनसा अर्च्चयन्ति । बालसूर्य्यसङ्काशमिदं चक्रम् अनाहतनादस्योत्पत्तिस्थानमित्यनाहतनाम्ना कथ्यते, एतन्निवक्तिर्यथा ;—तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् । कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् । तन्मध्ये वाणलिङ्गन्तु सूर्य्यायुतसमप्रभम् । शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते । अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परमिति । अस्य चक्रस्य पूर्व्वादिद्वादशदलेषु अवस्थितस्यात्मनः यथाक्रमं निषवत्ववितर्कानुतापिताशाप्रकाशचिन्तासमीहासमतादम्भवैकल्यविवेकाहङ्कारख्यातिद्वादश फलानि । २० ।

अनाहतमुक्त्वा तदूर्द्ध्वस्थितं विशुद्धिनामकं चक्रं कथयति, कण्ठ इति । कण्ठे भारत्याः सरस्वत्याः स्थानम् आश्रयः, षोडशच्छदं षोडशपत्रविशिष्टपद्माकारं, विशुद्धिः विशुद्धिनामकं चक्रमित्यर्थः, अस्तीति शेषः । तत्र विशुद्धिनामके चक्रे षड्जादयः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादरूपा इत्यर्थः सप्त स्वराः सम्यक् यथायथं प्रभेदतः स्वस्वभेदानुसारेण, तिष्ठन्तीति शेषः । षड्जादीनां स्वराणां तानि तानि दलान्युपासनस्थानानीत्यर्थः । चक्रमेतत् षड्जादिस्वरप्रकाशजन्यविमलानन्दजनकतया शब्दविलोकनद्वारतया च आत्मनः कामपि विशुद्धिं विस्तारयद्विशुद्धिनाम्ना कथ्यते, तथाचोक्तं ;—तदूर्द्ध्वे तु विशुद्धाख्यं दलषोडशपङ्कजम् । स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् । विशुद्धिं तनुते यस्मात् जीवस्य हंसलोकनात् । विशुद्धं पद्ममाख्यातमिति । २१ ।

ललनाख्यं चक्रमाह ।—घण्टिकायां कपाटे, द्वादशपत्रं द्वादशदलकमलाकारं ललनाख्यं चक्रम्, अस्तीति शेषः । तस्य पूर्व्वादिद्वादशदलेष्वव-

ललनाख्ये घण्टिकायां चक्रं द्वादशपत्रकम् ।
भ्रूमध्ये द्विदलं चक्रमाज्ञाख्यं मनोरमम् ।
ततोऽप्यस्ति मनश्चक्रं षड्दलं सर्व्वसौख्यदम् ॥ २१ ॥

---

स्थित आत्मा यथाक्रमं मदमानस्नेहशोकखेदलुब्धतारतिसम्भ्रमोर्म्मिश्रद्धा-तोषदाक्षिण्यरूपाणि द्वादशफलान्यनुभवति । आज्ञाचक्रं कथयति, भ्रूमध्य इति ।—भ्रूमध्ये द्विदलं पत्रद्वयान्वितपद्माकारं, मनोरमं दर्शनीयम्, आज्ञा-संज्ञं चक्रम् अस्तीति शेषः । चक्रेऽस्मिन् गुर्व्वाज्ञासंक्रमणादाज्ञेति संज्ञास्य जाता ; यदुक्तं ;—आज्ञाचक्रं तदूर्द्धे तु आत्मनाधिष्ठितं परम् । आज्ञा-संक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ॥ इति । आत्मास्य दलद्वयेऽवस्थितो यथाक्रमं सत्वरजस्तमोलक्षणं फलत्रयमनुभवतीति ज्ञेयम् । मनश्चक्रमाह, तत इति । ततोऽपि आज्ञाचक्रादूर्द्धमिति शेषः, षड्दलं षट्पत्रकमला-कारं सर्व्वसौख्यदं सकलसुखसन्तानप्रदं मनश्चक्रं मनःसंज्ञकं चक्रम् अस्ति । मनसोऽत्रावस्थानादिदं मनश्चक्रमुच्यते । आत्मास्य षट्सु दलेष्ववस्थितो यथा-क्रमं स्वप्नरूपरसगन्धस्पर्शशब्दरूपान् विषयाननुभवतीति ज्ञेयम् । २२ ।

सोमचक्रमाह, तत इति ।—ततोऽपि मनश्चक्रादप्यूर्द्धमित्यर्थः, षोड़शदलं षोड़शदलकमलाकारं, सोमचक्रं सोमनामकं चक्रं, प्रकीर्त्तितं कथितं, मुनिभि-रिति शेषः । अस्य चक्रस्य पूर्व्वादिषोड़शदलेष्ववस्थितो जीवात्मा यथाक्रमं कृपाक्षमार्जवधैर्य्यवैराग्यधृतिहास्यरोमाञ्चविनयध्यानस्थैर्य्यगाम्भीर्य्योद्यमौदार्य्य-मैकाग्र्यप्रणिधानरूपाणि षोड़शफलान्यनुभवति । यथाहि सोमस्य षोड़श-कला विद्यन्ते, तथैवास्य चक्रस्य षोड़शदलेषु कृपाक्षमार्जवादिषोड़श-कलाः सन्तीति सोमचक्रमित्यस्य नाम । सहस्रपत्राख्यं चक्रान्तरमाह, चक्रमिति ।—ब्रह्मरन्ध्रे, सुधाधरम् अमृताधारभूतं, सहस्रपत्रं सहस्रदल-कमलाकारं, चक्रम्, अस्तीति शेषः । तत् सहस्रपत्रं चक्रं, सुधासारधाराभिः निरन्तरेणामृतप्रवाहवर्षणेनेत्यर्थः, तनुं देहम् अभिवर्द्धयते, अभितः पुष्णाति । ब्रह्मरन्ध्रान्तर्गतेऽस्मिन् चक्रे समवस्थितो जीवः सुधापूरनिमग्न इव

ततोऽपि षोडशदलं सोमचक्रं प्रकीर्तितम् ।
चन्द्रं तच्चपलन्तु ब्रह्मरन्ध्रे सुधाकरम् ।
तत् सुधासारधाराभिरभिवर्द्धयते तनुम् ॥ २३ ॥
सुषुम्नया ब्रह्मरन्ध्रमारोहत्यवरोहति ।
जीवः प्राणसमारूढो रज्ज्वा कोलाटिको यथा ॥ २४ ॥

---

कामपि परमां शान्तिमुपागतो गीतादिसंसिद्धिमवाप्नोतीति फलितार्थः । ब्रह्मरन्ध्रस्थानञ्च वक्ष्यमाणरीत्या । २१ ।

(एवं चक्राण्यभिधाय ब्रह्मरन्ध्रे जीवस्यारोहावरोहप्रकारं सोदाहरणमाह, सुषुम्नयेति ।—प्राणः प्राणवायुः, तं समारूढः प्राणपवनेनोपश्लिष्ट इत्यर्थः, जीवः जीवात्मा, रज्ज्वा रज्जुसाहाय्येन कोलाटिको यथा विषमनर्त्तकइव, सुषुम्नया, इडापिङ्गलयोर्नाड्योर्मध्यगता चन्द्रसूर्य्याग्निरूपा आधारादाब्रह्मरन्ध्रमायता नाडी सुषुम्ना नाम, तया करणेन, ब्रह्मरन्ध्रं ब्रह्मरन्ध्रपर्य्यन्तम् आरोहति, अवरोहति ब्रह्मरन्ध्राच्च अवतरति । यथाहि रज्जुनर्त्तको रज्जुसाहाय्येन ऊर्द्ध्वस्थिते आधारे उत्थाय तत्र यथाकामं नृत्यादिकं कृत्वा पुनरपि रज्जुमवलम्ब्यावतरति, तथा जीवोऽपि सुषुम्नासाहाय्येन ऊर्द्ध्वस्थिते ब्रह्मरन्ध्ररूपे अमृताधारे उत्थाय तत्र यथाकामं गीतादिकार्य्यं कृत्वा पुनरपि सुषुम्नामवलम्ब्यावतरतीति भावः । सुषुम्नाब्रह्मरन्ध्रयोर्विवरणं यथा ;—इडा वामे स्थिता नाडी पिङ्गला दक्षिणे मता । तयोर्मध्यगता नाडी सुषुम्ना च समा[illegible] । पादाङ्गुष्ठद्वयं याता स्थिताभ्यां शिरसा पुनः । ब्रह्मस्थानं समापन्ना सोमसूर्य्याग्निरूपिणी । तस्या मध्यगता नाडी चित्राख्या योगिवल्लभा । ब्रह्मरन्ध्रं विदुस्तत्र पद्मसूत्रनिभं परम् ।२४।)

पूर्व्वश्लोके सुषुम्नानाडीमुक्त्वा तत्सदृशान्यान्यपि प्रधाना नाडीर्निर्दिशति, ताश्चेति ।—ताः नाड्यश्च भूरितराः, देहमध्ये सप्तशतानि नाड्यः सन्तीति भूरितरा इत्युक्तम् । तासु नाडीषु चतुर्दश नाड्य इतिशेषः, मुख्याः प्रधानाः प्रोक्ताः । प्रधानानामेव नामानि निर्दिशति सुषुम्नेत्यादि ।—सुषुम्ना, इडा, पिङ्गला, कुहूः, पयस्विनी, गान्धारी, हस्तिजिह्वा, वारणा, यशस्विनी, विश्वोदरा, शङ्खिनी, पूषा, सरस्वती, अलम्बुषा चेति चतुर्दश मुख्या इति पूर्व्वेणान्वयः ।

तासु भूरितराश्चात्र मुख्याः प्रोक्ताश्चतुर्दश।
सुषुम्णेड़ा पिङ्गला च कुहूश्चैव पयस्विनी॥ २५॥
गान्धारी हस्तिजिह्वा च वारणा च यशस्विनी।
विश्वोदरा शङ्खिनी च ततः पूषा सरस्वती।
अलम्बुषेति तन्नाड्यस्तिस्रोऽमुख्यतमा मताः॥ २६॥

---

तत्र तासु नाड़ीषु मध्ये इत्यर्थः, आद्याः प्रथमनिर्द्दिष्टाः, तिस्रः सुषुम्णेड़ापिङ्गलाख्या नाड्य इत्यर्थः, मुख्यतमाः, प्रधानतमाः मताः। आधाराद्ब्रह्मरन्ध्रमायता नाड़ी सुषुम्णा इतिपूर्व्वमेवोक्तं, पुनरपि तद्विवरणं यथा ;—मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषसे। मध्ये नाड़ी सुषुम्णा त्रितयगुणमयी चन्द्रसूर्य्याग्निरूपा॥ इति षट्चक्रभेदः। इयञ्च नाड़ी विष्णुशक्तिस्वरूपिणी मोक्षप्रदायिनी चेति तिसृष्वपि श्रेष्ठा कथिता। वामवृक्काधःस्था धनुर्वक्रा वामनासापर्य्यन्तमायता नाड़ी इड़ा नाम। दक्षिणवृक्काधःस्था धनुर्वक्रा दक्षिणनासान्तं गता नाड़ी पिङ्गला नाम ; तद्विवरणं यथा योगार्णवे,—इड़ा च शुद्धचन्द्राभा तस्या वामे व्यवस्थिता। पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रिता॥ इति। अन्यच्च यथा ; इडायां सञ्चरेच्चन्द्रः पिङ्गलायां दिवाकरः। ज्ञातौ योगनिदानज्ञैः सुषुम्णायां तु तावुभौ॥ इति। कुहूर्नाम नाड़ी सुषुम्णाया वामपार्श्वे लिङ्गस्थानपर्य्यन्तमायता तिष्ठति। पयस्विनी पूषासरस्वत्योर्मध्यदेशे दक्षिणकर्णावधि वितता तिष्ठति। गान्धारी इड़ायाः पृष्ठदेशे तिष्ठति, यदुक्तं ;—इड़ापृष्ठे तु गान्धारी मयूरगलसन्निभा। सव्यपादादिनेत्रान्तव्यापिनी परिकीर्त्तिता॥ इति। हस्तिजिह्वा इड़ायाः पूर्व्वप्रदेशे वामनेत्रादारभ्य वामपादाङ्गुष्ठपर्य्यन्तमायता तिष्ठति। वारणा कुहूयशस्विन्योर्मध्यदेशे सर्व्वस्थानं व्याप्य तिष्ठति। यशस्विनी पिङ्गलायाः पूर्व्वप्रदेशे अङ्गुष्ठादारभ्य दक्षिणाक्षिपर्य्यन्तमायता तिष्ठति। विश्वोदरा कुहूहस्तिजिह्वयोर्मध्यदेशे अखिलं देहं व्याप्य तिष्ठति। शङ्खिनी गान्धारीसरस्वत्योर्मध्यदेशे वामकर्णपर्य्यन्तं वितता तिष्ठति। पूषाः पिङ्गलायाः पृष्ठदेशे दक्षिणनेत्रादारभ्य कुक्षिपर्य्यन्तमायता तिष्ठति। सरस्वती सुषुम्णाया दक्षिणपार्श्वे ऊर्द्ध्वजिह्वापर्य्यन्तमायता तिष्ठति। अलम्बुषा पायुमूलमवलम्ब्य कन्दमध्यमध्यास्ते। प्रधानानां नाड़ीनामेवमवस्थानमन्यासाद्येषां ज्ञातव्यमित्यलमनल्पपल्लवितेन। २५। २६।

एवंविधे तु देहेऽस्मिन् मलसञ्चयसंहते।
प्रसाधयन्ति धीमन्तो भुक्तिं मुक्तिमुपायतः॥ २७॥
अथ नादस्य चोत्पत्तिं वक्ष्ये शास्त्रविवेकतः॥ २८॥

---

सम्प्रति शारीरप्रस्तावमुपसंहरति, एवंविध इति।—एवंविधे, पूर्व्वोक्त-नाड़ीचक्रादिसम्पन्ने, मलसञ्चयसंहते विण्मूत्रश्लेष्मादिसङ्कुले, अस्मिन् परिदृश्यमाने भौतिके देहे; धीमन्तः पण्डिताः भुक्तिं परमानन्दोपभोगं, मुक्तिं मोक्षं च, उपायतः, वक्ष्यमाणेन नादोपासनरूपेण उपायेन, प्रसाधयन्ति सम्पादयन्ति लभन्त इति यावत्।२७।

एवं पिण्डनिरूपणमुपसंहरन् प्रकृतमनुसरति, अथेति।—अथ अनन्तरं पिण्डनिरूपणात् परमित्यर्थः, यद्वा मङ्गलार्थोऽयमथशब्दो नादोत्पत्ति-प्रकरणारम्भे प्रयुक्तः स्वाभिलषितं गमयिष्यतीत्यभिप्रायः, उक्तञ्च,—ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभाविति। शास्त्रविवेकतः सङ्गीतशास्त्रं सम्यक् विविच्य इत्यर्थः। नादस्य उत्पत्तिं वक्ष्ये कथयिष्यामि, इति प्रतिज्ञावाक्यम्।२८।

ननु नादस्याकिञ्चित्करत्वेन तन्निरूपणं व्यर्थं न च तत्र श्रोतुः प्रवृत्तिः, प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायादित्याशङ्क्य प्रथमं नादस्यानेकश्रेयःसाधनतां प्रदर्शयन्नाह, धर्म्मेति।—धर्म्मार्थकाममोक्षाणाम् इदं नादरूपम् एव एकसाधनं मुख्य उपायः, इदमिति विधेयप्राधान्यात् नपुंसकं। तत्र धर्म्मो नाम स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनमदृष्टं, यदुक्तं भाषापरिच्छेदे,—धर्म्माधर्म्मावदृष्टं स्याद्धर्म्मः स्वर्गादिसाधनम्। गङ्गास्नानादि यागादि व्यापारः परिकीर्त्तितः॥ इति। अर्थो नाम ऐहिकसौभाग्यसाधनं धनादिकम्। काम्यत इति व्युत्पत्त्या कामो भोग्यवस्तु, विषयाभिलाषो वा, यदुक्तं, पुंसो या विषयापेक्षा स काम इति भण्यत इति। मोक्षो नाम सर्व्वदुःखोपशमलक्षणः परब्रह्मणि लयः। एतेषां नाद एव प्रशस्तः प्राप्त्युपाय इति फलितार्थः। तथाहि, धर्म्मोपयोगि-नारायणचरणारविन्दादिस्तवादीनाम् अर्थकामोपयोगिराजोपस्थानादीनां

किञ्च—

धर्म्मार्थकाममोक्षाणामिदमेवैकसाधनम् ॥ २८ ॥

नादविद्यां परां लब्ध्वा सरस्वत्याः प्रसादतः।

कम्बलाश्वतरौ नागौ शम्भोः कुण्डलतां गतौ ॥ ३० ॥

मोक्षोपयोगिवेदादिवाक्यानाञ्च सर्व्वेषामेव नादात्मकत्वात् नादाच्चतुर्व्वर्ग-फलप्राप्तिः सिद्धैव। अन्यच्च,—नादरूपः स्मृतो ब्रह्मा नादरूपो जनार्द्दनः। नादरूपा परा शक्तिर्नादरूपोमहेश्वरः ॥ इत्यादिना, शब्दोब्रह्मेत्यादिश्रुति-वाक्येन च ; ब्रह्मादीनां साक्षान्नादस्वरूपत्वात् ब्रह्मादयोनादोपासनेनैव सम्य-गुपासिता भक्तेभ्यश्चतुर्व्वर्गफलं ददतीति किमु विस्तरेण। २९।

एवं नादस्य चतुर्व्वर्गफलप्राप्तिरूपं प्रयोजनमभिधाय श्लोकचतुष्टयेनास्य लोकोत्तरं माहात्म्यमुदीरयन्नाह, नादविद्यामिति।—कम्बलाश्वतरौ नागौ स्वनामख्यातौ सर्पराजौ, सरस्वत्याः प्रसादतः वाग्देव्याः कृपया, पराम् अनर्घ्यां, नादविद्यां लब्ध्वा, शम्भोः शिवस्य, कुण्डलतां श्रवणाभरणतां, गतौ प्राप्तौ। वाग्देवीप्रसादलब्धेन नादेनैव तयोस्तादृशपरमोत्कर्षलाभात् सर्व्वैरेव परमोत्कर्षलिप्सुभिः सर्व्वात्मना नादविद्यायामेव यतनीयमिति कवेरभि-प्रायः। ३०।

आस्तां तावत् ज्ञानिनां वार्त्ता, अज्ञाना मृगादयोऽपि नादेन मुह्यन्तीत्याह, पशुरिति।—पशुः, शिशुर्बालकः, मृगः हरिणो वा, नादेन वेणुवीणादिभवं नादमाकर्ण्य इत्यर्थः, परितुष्यति परमानन्दमनुभवति। अतः कारणात् पशुप्रभृतीनामप्यानन्दजननादित्यर्थः, नादस्य माहात्म्यं गौरवं, व्याख्यातुं निर्व्वक्तुं, केन शक्यते, अनिर्व्वचनीयत्वात् न कोऽपि अस्य महिमानं कार्त्स्न्येन वक्तुं शक्नोतीत्यर्थः। एवंविधाः श्लोका भूरिशोदृश्यन्ते, तत्र दिङ्मात्रं यथा,—गीतेन हरिणा रज्जुं प्राप्नुवन्त्यपि पक्षिणः। वनादायान्ति फणिनः शिशवो न रुदन्ति च ॥ इदमपि प्रत्यक्षतो दृश्यते यत् आहितुण्डिका संगीनादेन विवरेभ्यः

पशुः शिशुर्मृगोवापि नादेन परितुष्यति ।
अतो नादस्य माहात्म्यं व्याख्यातुं केन शक्यते ॥ २१ ॥

अत्र चाञ्जनेयः—

नादाब्धेस्तु परं पारं न जानाति सरस्वती ।
अद्यापि मज्जनभयात्तुम्बं वहति वक्षसि ॥ २२ ॥

---

सर्पान् आकृष्य तैः खेलन्तीति । मृगोवापीत्यत्र मृगोव्याल इति केचित् पठन्ति । २१ ।

नादाब्धेरिति । सरस्वती वाग्देवता, स्वयं वाङ्मयाधिष्ठात्री भूत्वापीति-शेषः, नादाब्धेः नादरूपमहासागरस्य, दुरवगाहत्वादतिविशालत्वाच्च नादस्य सागरसाम्यम् । परं पारं अपरां सीमां, न जानाति । अत्रोत्प्रेक्ष्यते, अद्यापीति । अद्यापि मज्जनभयात् आत्मनः सलिलमध्ये मज्जनशङ्कया, वक्षसि तुम्बम् अलाबुं वहति । अद्यापीत्यनेन नादाब्धितरणे वाग्देव्या-श्चिरकालप्रयासोऽपि विफलतां यात इति सूचितः । अत्र मज्जनभयादिवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा । वस्तुतस्तु सरस्वती वीणावादनार्थ-मलाबुद्वयमेव धारयति, कविस्तु नादस्यापरिच्छेद्यतां वैचित्र्यविशेषेणोद्योतयितुं मज्जनभयादिवात्मनः समवलम्बनाय सन्तरणसाधनमलाबुं धारयतीत्याह ।२२।

वीणेति । जानातीति ज्ञः, इगुपधज्ञेत्यादिना कप्रत्ययः (१), वीणावादन-तत्त्वस्य ज्ञः; अथवा, वीणावादनतत्त्वं जानातीति आतोऽनुपसर्गे कः, इति कप्रत्ययः, (२), यः खलु याथार्थ्येन वीणायन्त्रं वादयितुं जानाति तादृशोजन इत्यर्थः । श्रुतिजातिविशारदः श्रुतिजातीनां सम्यक् परिज्ञाने कुशलः, श्रुतिजातिविवरणञ्च वक्ष्यमाणरीत्या । तालज्ञः कालक्रियामाने अभिज्ञश्च,

---

(१) पा ३।१।१३५ सू।　　(२) पा ३।२।३ सू।

तथा च विज्ञानेश्वरः—

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाऽप्रयासेन मोक्षमार्गं नियच्छति ॥ २३ ॥

## अथ नादोत्पत्तिप्रकारः ।

आत्मना प्रेरितं चित्तं वह्निमाहन्ति देहजम् ।
ब्रह्मग्रन्थिस्थितं प्राणं स प्रेरयति पावकः ॥ २४ ॥
पावकप्रेरितः सोऽथ क्रमादूर्ध्वपथे चरन् ।
अतिसूक्ष्मध्वनिं नाभौ हृदि सूक्ष्मं गले पुनः ॥ २५ ॥

---

तालज्ञः कालक्रियामानमित्यमरः । अप्रयासेन सुखेन परमानन्दसम्भोग-सुखेनेति यावत्, मोक्षमार्गं निर्वाणसरणीं नियच्छति प्राप्नोति । २३ ।

नादोत्पत्तिप्रकारमाह आत्मनेति ।—आत्मना चेतनेन विवक्षमाणेनेति शेषः, प्रेरितं चालितं, चित्तम् अन्तःकरणं कर्तृ, देहजम् उदरस्थितं, वह्निं पावकं, आहन्ति ताडयति । सः अन्तःकरणप्रेरितः पावकः, ब्रह्मग्रन्थिस्थितं, सुषुम्नया सह इडापिङ्गलयोः सम्बन्धस्थानं ब्रह्मग्रन्थिः, तत्र स्थितं, ब्रह्मग्रन्थि-स्थानं निरूपयिष्यामः, प्राणं प्राणनामानं मुख्यतमं वायुं प्रेरयति चालयति । अथ अनन्तरं, पावकप्रेरितः देहजेन वह्निना चालितः, सः प्राणवायुरितिशेषः, क्रमात् ऊर्ध्वपथे चरन् आघातजनितवेगात् ऊर्ध्वमार्गेण गच्छन्, नाभौ अति-सूक्ष्मध्वनिं, हृदि सूक्ष्मं ध्वनिं, पुनः तथा, गले पुष्टं ध्वनिं, शीर्षे तु अपुष्टं ध्वनिं, तथा वदने कृत्रिमं ध्वनिम् आविर्भावयति प्रकटीकरोति, इत्येवं उक्तप्रकारेण यथाक्रमं नाभिहृत्कण्ठशीर्षवदनरूपपञ्चस्थानसंयोगेन पञ्चविधस्य ध्वनेराविर्भावादित्यर्थः, बुधैः पण्डितैः, पञ्चधा अतिसूक्ष्मसूक्ष्मपुष्टापुष्टकृत्रिमभेदात् पञ्चप्रकार इत्यर्थः, कीर्त्यते कथ्यते नाद इतिशेषः । केचित्तु आत्मा ज्ञातार्थविवक्षया तद्बोधकशब्दविस्तारणाय प्रथममन्तःकरणं प्रेरयति, अन्तः-करणञ्च मूलाधारगतं पावकं प्रेरयति, एवमन्तःकरणप्रेरितश्च पावकः

पुष्टं चौर्वं त्वपुष्टञ्च कृत्रिमं वदन्ते तथा ।
आविर्भावयतीत्येवं पञ्चधा कीर्त्यते बुधैः ॥ २६ ॥
कथं कण्ठस्थितः पुष्टः स्यादपुष्टः शिरःस्थितः ॥ २७ ॥
उच्यते तत्र शिरसि सञ्चार्य्यारोहिवर्णयोः ॥
संभूतिर्न भवेत्तस्मादपुष्टः शिरसि स्थितः ॥ २८ ॥

---

प्राणवायुं प्रेरयति, पावकप्रेरितश्च प्राणवायुः क्रमात् नाभिदेशमुत्सर्पन् नाभिदेशसंयोगादतिसूक्ष्मं ध्वनिमुत्पादयति, अतिसूक्ष्मोऽयं ध्वनिर्न्न योगिभिरेव श्रूयते न सामान्यजनश्रुतिगोचरतामुपैति, ततः स हृदयदेशं परिसरन् हृदयदेशसंयोगात् सूक्ष्मं ध्वनिमुत्पादयति, अयं सूक्ष्मोध्वनिः सकर्णपिधानेन कदाचिदस्माभिरप्युपलभ्यते । ततः स मुखपर्य्यन्तमाक्रामन् कण्ठदेशं प्राप्य मूर्द्धानमाहत्य तत्प्रतिघातेन मुखविवरे परावृत्य कण्ठादितत्तद्देशेषु चाभिघातेनापरान् ध्वनीनुत्पादयतीति निर्गलितार्थः । यदुक्तं शिक्षायां,—आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा मतः ॥ इति । मतङ्गस्तु पुष्टापुष्टयोर्व्यक्ताव्यक्तरूपे नामनी चकार, यथा,—सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तोऽव्यक्तश्च कृत्रिमः । इति । २४ । २५ । २६ ।

कण्ठशिरःस्थितयोः शब्दयोः पुष्टापुष्टनामकरणे हेतुं पृच्छति, कथमिति ।—कण्ठस्थितः कण्ठसंयोगजन्यः शब्दइत्यर्थः, कथं केन हेतुना पुष्टः, पुष्टनाम्नाऽभिहितः, कथञ्च शिरःस्थितः शिरःसंयोगजन्यः शब्दइत्यर्थः, अपुष्टः स्यात् अपुष्टनाम्नाऽभिहितोभवेत्? इति जिज्ञासानन्तरं तदुत्तरं कथयति, उच्यतइति ।—उच्यते तादृशनामकरणकारणं कथ्यते; तत्र कण्ठशिरसोर्मध्ये, शिरसि सञ्चार्य्यारोहिवर्णयोः, यः शिरसि सञ्चरति, यश्च तदारोहति तादृशयोः शब्दयोः, सम्भूतिः अभिव्यक्तिः बहिःप्रकाश इति यावत्, यस्मात् न भवेत्, तस्मात्कारणादितिशेषः, शिरसि स्थितो ध्वनिरितिशेषः, अपुष्टः अपुष्टनाम्ना अभिहितः । एवं कण्ठे उच्चार्य्यमानस्य नादस्य अभिव्यक्तेस्तस्य पुष्टत्वमिति वाक्यशेषः । २७ । २८ ।

न-कारं प्राणनामानं द-कारमनलं विदुः ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥ ३९ ॥

## अथ ब्रह्मग्रन्थेर्लक्षणम् ।

आधारात् द्व्यङ्गुलादूर्ध्वं मेढ्रात् द्व्यङ्गुलादधः ।
एकाङ्गुलं देहमध्ये तप्तजाम्बूनदप्रभम् ॥ ४० ॥
तत्रास्तेऽग्निशिखा तन्वी चक्रात्तस्मान्नवाङ्गुलात् ॥ ४१ ॥
देहस्य कन्दोऽस्त्युत्सेधायामाभ्यां चतुरङ्गुलः ।
ब्रह्मग्रन्थिरिति प्रोक्ता तस्य नाम पुरातनैः ॥ ४२ ॥

---

नादशब्दं व्युत्पादयन्नाह, न-कारमिति ।—न-कारं प्राणनामानं, दकारं च अनलं, विदुः कथयन्ति पण्डिता इतिशेषः, न-कारशब्दः प्राणवायोर्नामान्तरं दकारशब्दश्च अनलस्य नामान्तरमित्यर्थः, प्राणाग्निसंयोगात् न-दाभ्यामित्यर्थः जातः, तेन हेतुना नादोऽभिधीयते। तथाहि, न-दाभ्यां जातः इति अण्प्रत्यये आदिवृद्धौ च नाद इति रूपं भवति। नादस्य प्राणाग्निसंयोगजन्यत्वं प्रागेव निरूपितम्। केचित् नदतीति नदधातोर्घञ्प्रत्ययेन नादशब्दं व्युत्पादयन्ति, तथाचोक्तं,—नाभेरूर्ध्वं हृदिस्थानान्मारुतः प्राणसंज्ञकः। नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥ इति । नादोऽयं नदतेर्धातोः स च पञ्चविधो भवेत् । इति च । ३९ ।

ब्रह्मग्रन्थिं निरूपयन्नाह, आधारादिति ।—आधारात् पायुपस्थान्तरस्थादाधारचक्रात्, तत्स्वरूपमुक्तमेव। द्व्यङ्गुलादूर्ध्वं अङ्गुलिद्वयमिते ऊर्द्धदेशे तथा, मेढ्रात् लिङ्गस्थानात् द्व्यङ्गुलादधः अङ्गुलिद्वयमिते अधोदेशे, देहमध्ये शरीरस्य मध्यदेशे, एकाङ्गुलम् एकाङ्गुलप्रमाणं, तप्तजाम्बूनदप्रभं द्रुतसुवर्णवर्णं चक्रमितिशेषः। तत्र तन्वी सूक्ष्मा, अग्निशिखा, नादाख्या आस्ते। देहमध्ये इत्यत्र देहमध्यमिति क्वचित्पाठः। तस्मात् चक्रात् देहमध्यात् आधारचक्रादित्यर्थः। नवाङ्गुलात् नवाङ्गुलप्रमाणात् चक्रादित्यस्य विशेषणं। नवाङ्गुलादित्यत्र नवाङ्गुलं नवाङ्गुलेरित्यादि

अथ वायुः—

प्राणापानौ तथा व्यानसमानोदानसंज्ञकाः ।
नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ४३ ॥
तेषां मुख्यतमः प्राणो नाभिकन्दादधः स्थितः ।
चरत्यास्ये नासिकयोर्नाभौ हृदयपङ्कजे ॥ ४४ ॥
शब्दोच्चारणनिश्वासोच्छ्वासकासादिकारणम् ।
अपानस्तु गुदे मेढ्रे कटीजङ्घोदरेषु च ॥ ४५ ॥

---

पाठान्तरं दृश्यते। उत्सेधायामाभ्यां, उत्सेध उच्छ्रायः, आयामो विस्तारः, ताभ्यां, चतुरङ्गुलः, षडङ्गुलिचतुरङ्गुलमानकः, कन्दः, तस्य नाम पुरातनैः प्राचीनैः पण्डितैः, नाड्यण्डमिति प्रोक्ता। प्रोक्ता इत्यत्र प्रोक्तमिति क्वचित्पाठः। ४०। ४१। ४२।

प्राणापानावित्यादिश्लोकेन शरीरगता दश वायुविकाराः प्रोक्ताः, ते च यथा; प्राणः, अपानः, व्यानः, समानः, उदानः, नागः, कूर्म्मः, कृकरः, देवदत्तः, धनञ्जयश्चेति। ४३।

वायूनां नामान्युक्त्वा पञ्चभिः श्लोकैस्तेषां स्थानानि कर्म्माणि च निरूपयति, तेषामित्यादि।—तेषां वायूनां मध्ये मुख्यतमः प्रधानभूतः, प्राणो वायुः, नाभिकन्दादधःस्थितः मूलाधारे अवस्थितः सन्, आस्ये मुखे, नासिकयोः नासारन्ध्रद्वयमध्ये, नाभौ नाभिदेशे, हृदयपङ्कजे हृदयस्थितद्वादशदलकमलाकारे चक्रे इत्यर्थः, चरति सञ्चरति। तद्व्यापारमाह, शब्देति।—शब्दोच्चारणं वाङ्निष्पत्तिकरणं, निश्वासः, उच्छ्वासः अन्तर्मुखश्वासः, तदादीनां कारणं साधनम्, प्राणवायुरिति शेषः। अपानस्तु गुदे पायौ, मेढ्रे उपस्थे, कटीजङ्घोदरेषु चरतीति शेषः। विण्मूत्रशुक्रादिवहनमपानस्य कर्म्मेति बोध्यं, यदुक्तं;—अधो नयत्यपानस्तु आहारञ्च नृणामधः। मूत्रशुक्रवहो वायुरपान इति कीर्त्तितः॥ इति। व्यानो वायुः अक्षिश्रोत्रमुखेषु [illegible]पाद-पृष्ठेषु, कण्ठे, घ्राणे नासिकयोश्च, तिष्ठति। आकुञ्चनप्रसारणादि व्यानस्य कर्म्म बोध्यम्। समानो वायुः वह्निना चोदर्य्येण [illegible] सह निखिलं शरीरं

व्यानोऽक्षिश्रोत्रगुल्फेषु कट्यां घ्राणे च तिष्ठति
समानो व्याप्य निखिलं शरीरं वह्निना सह ॥ ४६ ॥
उदानः पादयोरास्ते हस्तयोरङ्गसन्धिषु ।
त्वगादिधातूनाश्रित्य पञ्च नागादयः स्थिताः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ॥ ४७ ॥
हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे च व्यानः सर्व्वशरीरगः ॥ ४८ ॥

---

व्याप्य तिष्ठतीति शेषः । अशितपीतादीनां समतानयनद्वारा शरीरपोषणं समानस्य कर्म्म ज्ञेयम् । उदानो वायुः, हस्तयोः, पादयोः, अङ्गसन्धिषु च आस्ते । ऊर्द्ध्वगमनवानुत्क्रमणवायुरयं, यदुक्तं ;—उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः, इति । ऊर्द्ध्वनयनमेवास्य कर्म्म । नागादयः नागकूर्म्मकृकर-देवदत्तधनञ्जयरूपाः पञ्च वायव इति शेषः, त्वगादिधातून् आश्रित्य स्थिताः । त्वक् स्पर्शेन्द्रियम्, असृक् शोणितं, मांसं, मेदः, अस्थि, मज्जा अस्थिमांसान्त-र्गतस्नेहधातुविशेषः, यदुक्तं ;—अस्थिवत् स्वाग्निना पक्वं तस्य सारो घनो घनः । यः स्नेहवत् पृथग्भूतः स मज्जेत्यभिधीयते ॥ शुक्रं वीर्य्यं, एतानि धातवः शरीरधारणाद्धातुसंज्ञकानि । तत्र त्वचि धातौ नागस्य, शोणिते धातौ कूर्म्मस्य, मांसे कृकरस्य, मेदसि देवदत्तस्य, अस्थ्नि धनञ्जयस्य अवस्थिति-र्ज्ञातव्या ; एतेषां कर्म्माणि च यथाक्रमं उद्गारोन्मीलनक्षुधाजननविजृम्भण-मोहरूपाणि, यदुक्तं ;—उद्गारे नाग आख्यातः कूर्म्म उन्मीलने स्मृतः । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतञ्चापि सर्व्वव्यापी धनञ्जयः ॥ इति । हृदि प्राण इत्यादिना श्लोकेन प्राणापानसमानोदानवायूनां प्रधानस्थानानि हृदयपायुनाभिकण्ठरूपाणि व्यानस्य च सर्व्वमेव शरीर-मिति सूचितम् । ४४ । ४५ । ४६ । ४७ । ४८ ।

एवं प्रसङ्गाद्ब्रह्मग्रन्थिवायुविवरणमभिधाय पुनः प्रकृतं नादमेवानु-सरति, इतीति ।—इति पूर्व्वोक्तप्रकारा, चतुर्विधाः ब्रह्मग्रन्थिवायुस्थित्य-

## अथ प्रकृतम्।

इति वस्तुस्थितिस्थानवशात्त्रेधा भवेदसौ।
हृदि मन्द्रो गले मध्यो मूर्द्धि तार इति क्रमात् ॥ ४९ ॥
द्विगुणः पूर्वपूर्वस्माद्वै स्यादुत्तरोत्तरः।
एवं शारीरवीणायां दारव्यान्तु विपर्य्ययः ॥ ५० ॥

---

वस्तूनां अवस्थानं। असौ नाद इति शेषः, स्थाने शरीरे त्रेधा त्रिविधः भवेत्। त्रैविध्यमाह हृदीति। हृदि उत्पद्यमानो नाद इति शेषः, मन्द्र इति कथ्यते, एवं गले उत्पद्यमानो नादः मध्यः, मूर्द्धि उत्पद्यमानो नादश्च तार इति कथ्यते। एतेषां परिमाणमाह, द्विगुण इति। अयं नादः पूर्वपूर्वस्मात् उत्तरोत्तरः द्विगुणः स्यात्; तथाहि मन्द्राद्द्विगुणो मध्यः, मध्याच्च द्विगुणस्तारः, इति फलितार्थः। एवं शारीरवीणायां देहरूपवीणायाञ्च, मन्द्रमध्यताराणां पूर्व्वोक्तपरिमाणं ज्ञेयमित्यर्थः। दारव्यां तु दारुनिर्म्मिते प्रकृते वीणायन्त्रे तु, विपर्य्ययः पूर्व्वोक्तमानस्य वैपरीत्यं ज्ञेयं; तदुक्तं सङ्गीतसमयसारे,—त्रीणि स्थानानि हृत्कण्ठशिरांसीति समासतः। एकैकमपि तेषु स्यात् द्वाविंशतिविधायकं। द्वाविंशतिविधो मन्द्रो ध्वनिः सञ्जायते हृदि। यथोत्तरमसौ तारो वी[illegible]-मधरोत्तरम्॥ स एव द्विगुणो मध्यः कण्ठस्थाने यथाक्रमम्। स एव मस्तके तारः स्यान्मध्यात् द्विगुणः क्रमात्॥ इति। ४९। ५०।

श्रुतिनामकान् द्वाविंशतिसंख्यकान् नादस्य भेदान् कथयिष्यन् प्रथमं श्रुतिलक्षणमाह, लक्ष्येति। लक्ष्यमाणश्रवणात् अनुरणनं विना नादः श्रुतिः इति उच्यते। प्रथमं हि शब्दोद्भवमात्रलक्ष्य एव श्रूयते सैव श्रुतिरित्यर्थः, स्वरारम्भकावयवशब्दविशेषः श्रुतिरिति भावः, तदुक्तं;—प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः। सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा॥ इति। अनुरणनं विनेति स्वरस्य व्यवच्छेदः। शब्दोत्पत्तिर्वीचितरङ्गन्यायेनेति केचित्, तेषां मते भेर्य्यादावभिघातात् तद्देशावच्छेदेन प्रथमशब्दस्योत्पत्तिः, अनन्तरं तद्बहिर्देशादिमवच्छेदेन प्रथमशब्दात्तत्रापको-द्वितीयः शब्दः, तदनन्तरं तद्बहिर्देशादिमवच्छिन्नस्तृतीयः शब्दो द्वितीयशब्दाद्-

## अथ श्रुतिस्वरूपम्।

स्वरूपमात्रश्रवणान्नादोऽनुरणनं विना।
श्रुतिरित्युच्यते भेदास्तस्या द्वाविंशतिर्मताः॥५१॥
तदभिव्यक्तये नाडीस्थितिर्देहे निरूप्यते।
इडा वामे स्थिता नाडी दक्षिणे पिङ्गला तथा।
हृदि नाडी सुषुम्ना च ब्रह्मरन्ध्रावधि स्थिता॥५२॥

---

भवतीत्येवंक्रमेण चतुर्थादिशब्दानामप्युत्पत्तिर्बोध्या। प्रकृते प्रथमशब्दस्य श्रुतित्वं, तद्व्यापकद्वितीयादिशब्दानामनुरणनत्वं ज्ञेयं, अनुरणनस्य च स्वरत्वं ज्ञेयं। केचित्तु कदम्बगोलकन्यायात् नादस्योत्पत्तिरित्याहुः, एतन्मते द्वितीयादिशब्दो नैको नवा दशादिरविच्छिन्नः, किन्तु दशसु दिक्षु द्वितीयाद्याः शब्दाः दश उत्पद्यन्ते इति विशेषः। तस्याः श्रुतेः द्वाविंशतिर्भेदाः मताः। श्रुतीनामभिव्यक्तिं रत्नाकरसङ्गीतसमयसारादिकृतो वीणाद्वये निदर्शयामासुः। तथाहि, यथा श्रवणकाले एकवीणेव अवभासेते तथा समाने द्वे वीणे कार्य्ये, तयोः प्रत्येकं द्वाविंशतिस्तन्त्र्यः स्थापनीयाः, तासु आद्या मन्द्रतमध्वाना कर्त्तव्या, द्वितीया तस्याः सकाशात् किञ्चिदुच्चध्वनिः कार्य्या, एवं क्रमेण सर्व्वाः तन्त्र्यः स्थापनीयाः, यथा च मध्ये विच्छेदं ध्वन्यन्तरं न जायते तन्त्रीणां तथा नैरन्तर्य्यं कर्त्तव्यं, तास्तन्त्र्यः अधोऽधःस्थितास्तीव्रनादा भवन्ति, ताभ्यः द्वाविंशतिसंख्यकाभ्यस्तन्त्रीभ्यः समुत्पन्नाः द्वाविंशतिर्नादाः द्वाविंशतिभेदाः श्रुतय इत्युच्यन्ते। यथा खलु दारव्या वीणाया द्वाविंशतिसंख्यकासु तन्त्रीषु द्वाविंशतिः श्रुतयः अभिव्यज्यन्ते, तथा शारीरवीणायाः सुषुम्नासंलग्नासु तिर्य्यक्स्थितासु द्वाविंशतिसंख्यकासु नाडीषु मारुतसंयोगात् द्वाविंशतिः श्रुतयो जायन्ते। ५१। ५२।

तीव्रेत्यादिभिः श्लोकैः श्रुतीनां नामानि स्वरस्थितिञ्च कथयति। द्वाविंशतिसंख्यकासु श्रुतिषु मध्ये षड्जसंश्रयाः श्रुतयश्चतस्रः, यथा;—प्रथमा तीव्रा, द्वितीया कुमुद्वती, तृतीया मन्दा, चतुर्थी छन्दोवती चेति। ऋषभसंश्रयाः श्रुतयस्तिस्रः यथा;—पञ्चमी दयावती, षष्ठी रञ्जनी, सप्तमी रतिका चेति। गान्धारसंश्रये श्रुती द्वे, यथा;—अष्टमी रौद्री,

## अथ श्रुतयः ।

तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु षड्जगाः ।
दयावती रञ्जनी च रतिका चर्षभे स्थिता ॥ ५३ ॥
रौद्री क्रोधा च गान्धारे वज्रिकाऽथ प्रसारिणी ।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ ५४ ॥
क्षितीरक्ता च सन्दीपन्यालापिन्यपि पञ्चमे ।
मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः ॥ ५५ ॥
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥ ५६ ॥

---

नवमी क्रोधा चेति । मध्यमाश्रिताः श्रुतयश्चतस्रः, यथा ;—दशमी वज्रिका, एकादशी प्रसारिणी, द्वादशी प्रीतिः, त्रयोदशी मार्जनी चेति । पञ्चमाश्रिताः श्रुतयश्चतस्रः, यथा ;—चतुर्दशी क्षितिः, पञ्चदशी रक्ता, षोडशी सन्दीपनी, सप्तदशी आलापिनी चेति । धैवतसंश्रयाः श्रुतयस्तिस्रः, यथा ;—अष्टादशी मदन्ती, ऊनविंशी रोहिणी, विंशी रम्या चेति । निषादसंश्रये श्रुती द्वे, यथा ;—एकविंशी उग्रा, द्वाविंशी क्षोभिणी चेति । आसु मध्ये षड्‌जश्छन्दोवत्यां, ऋषभो रतिकायां, गान्धारः क्रोधायां, मध्यमो मार्जन्यां, पञ्चम आलापिन्यां, धैवतो रम्यायां, निषादश्च क्षोभिण्यां तिष्ठति, यदुक्तं रत्नावल्यां,—आदिश्रुतौ चतुर्थ्यां तु स्वरः षड्‌जोऽधितिष्ठति सप्तम्यामृषभस्तद्‌गान्धारो नवमोस्थितः विंश्यां धैवत आख्यातो द्वाविंश्यां तु निषादकः ॥ इति । एतेन यस्य स्वरस्य या अन्तिमा श्रुतिः स तत्रैव तिष्ठतीत्यायातम् । ५३ । ५४ । ५५ । ५६ ।

अथ स्वरस्य निर्वक्तिमर्थं लक्षणमाह, श्रुत्यनन्तरेति ।—यस्य श्रुतेरनन्तरं भवतीति श्रुत्यनन्तरभावी, तस्य भावः, तत्त्वं, श्रुतेरनन्तरमेव यो भवतीत्यर्थः, यश्च अनुरञ्जनात्मकः । प्रथमतश्चग्रामाहतायां तदुद्भावच्छेदेन यः प्रथमो-ध्वनिरुत्पद्यते सा श्रुतिरिति मानेनोक्तं, यस्तु प्रथमध्वनिज्ञापको ध्वनि-प्रवाहस्तदनन्तरं श्रूयते तदनुरञ्जनं, तदेव आत्मा स्वरूपं यस्य स तथोक्तः, अनुरञ्जनमेव स्वर इति भावः । अथ स्निग्धः श्रोत्राभिरामः, रञ्जकी-मनोऽभिरामश्च, यो स्वरः इति अभिधीयते कथ्यते । अथवा

[२१ पृः, टीकानुबन्धः]

# श्रुतिविवरणम्।

## सप्तानां शुद्धस्वराणां श्रुतिजाति-श्रुतिभेदसंख्यानिरूपणम्।

| यस्मिन् स्वरे | याः श्रुतिजातयः | याः श्रुतयः | यस्याः श्रुतिजातेः | ये भेदाः | यस्मिन् स्वरे |
|---|---|---|---|---|---|
| (१) षड्जे | १मा । दीप्ता | १मा । तीव्रा (१) | दीप्तायाः | तीव्रा | षड्जे |
| ,, | २या । आयता | २या । कुमुद्वती (२) | ,, | रौद्री | गान्धारे |
| ,, | ३या । मृदुः | ३या । मन्दा (३) | ,, | वज्रिका | मध्यमे |
| ,, | ४र्थी । मध्या | ४र्थी । छन्दोवती (४) | ,, | उग्रा | निषादे |
| (२) ऋषभे | १मा । करुणा | १मा । दयावती (५) | आयतायाः | कुमुद्वती | षड्जे |
| ,, | २या । मध्या | २या । रञ्जनी (६) | ,, | क्रोधा | गान्धारे |
| ,, | ३या । मृदुः | ३या । रतिका (७) | ,, | प्रसारिणी | मध्यमे |
| (३) गान्धारे | १मा । दीप्ता | १मा । रौद्री (८) | ,, | सन्दीपनी | पञ्चमे |
| ,, | २या । आयता | २या । क्रोधा (९) | ,, | रोहिणी | धैवते |
| (४) मध्यमे | १मा । दीप्ता | १मा । वज्रिका (१०) | करुणायाः | दयावती | ऋषभे |
| ,, | २या । आयता | २या । प्रसारिणी (११) | ,, | आलापिनी | पञ्चमे |
| ,, | ३या । मृदुः | ३या । प्रीतिः (१२) | ,, | मदन्ती | धैवते |
| ,, | ४र्थी । मध्या | ४र्थी । मार्जनी (१३) | मृदोः | मन्दा | षड्जे |
| (५) पञ्चमे | १मा । मृदुः | १मा । क्षितिः (१४) | ,, | रतिका | ऋषभे |
| ,, | २या । मध्या | २या । रक्ता (१५) | ,, | प्रीतिः | मध्यमे |
| ,, | ३या । आयता | ३या । सन्दीपनी (१६) | ,, | क्षितिः | पञ्चमे |
| ,, | ४र्थी । करुणा | ४र्थी । आलापिनी (१७) | मध्यायाः | छन्दोवती | षड्जे |
| (६) धैवते | १मा । करुणा | १मा । मदन्ती (१८) | ,, | रञ्जनी | ऋषभे |
| ,, | २या । आयता | २या । रोहिणी (१९) | ,, | मार्जनी | मध्यमे |
| ,, | ३या । मध्या | ३या । रम्या (२०) | ,, | रक्ता | पञ्चमे |
| (७) निषादे | १मा । दीप्ता | १मा । उग्रा (२१) | ,, | रम्या | धैवते |
| ,, | २या । मध्या | २या क्षोभिणी (२२) | ,, | क्षोभिणी | निषादे |
| ७ स्वराः | ५ श्रुतिजातयः | २२ श्रुतयः | ५ श्रुति-जातयः | २२ श्रुतयः | ७ स्वराः |

## अथ स्वरलक्षणम्।

श्रुत्यनन्तरभावित्वं यस्यानुरणनात्मकः।
स्निग्धश्च रञ्जकश्चासौ स्वर इत्यभिधीयते ॥ ५७ ॥

अथवा—

स्वयं यो राजते नादः स स्वरः परिकीर्त्तितः ॥ ५८ ॥

---

पक्षान्तरे, यो नादः स्वयम् अन्यानपेक्षया, राजते प्रकाशते, स स्वरः परिकीर्त्तितः, यदुक्तं मतङ्गेन, राजृ दीप्तावस्य धातोः स्वशब्दपूर्व्वकस्य च। स्वयं हि राजते यस्मात् तस्मात् स्वर इति स्मृतः ॥ एतेनास्य व्युत्पत्तिरपि प्रदर्शिता। केचित् दध्यादिन्यायेन श्रुतिरूपान्तरं स्वरः, इत्याहुः; तेषामयमभिप्रायः, यथा क्षीरमेव रूपान्तरपरिणतं दधी-त्युच्यते, तथा श्रुतिरेव अनुरणनरूपरूपान्तरपरिणता स्वर इत्युच्यते, यदुक्तं,—श्रुतयः स्वररूपेण परिणामं व्रजन्ति हि। परिणामे यथा क्षीरं दधिरूपेण सर्व्वदा ॥ इति। अन्ये प्रदीपेन घटादय इव स्वराः सर्व्वे पूर्व्वसिद्धाः श्रुतिभिर्व्यज्यन्त इत्याहुः, यदुक्तं,—षड्जादयः स्वराः सप्त व्यज्यन्ते श्रुतिभिः स्वराः। अन्धकारस्थिता यद्वत् प्रदीपेन घटादयः ॥ इति। केचिदुभयोरेव श्रवणेन्द्रियग्राह्यत्वाद् भेदराहित्याच्च स्वरश्रुत्योस्तादात्म्यमङ्गीकुर्व्वन्ति, तथाचोक्तं, विशेषस्पर्शशून्यत्वात् श्रवणेन्द्रियग्राह्ययोः। स्वरश्रुत्योः स्यात् तादात्म्यं जाति-व्यक्त्योरिवानयोः ॥ इति। केचित् स्वरश्रुत्योर्विवर्त्तविवर्त्तिभावं स्वीकुर्व्वन्ति, तेषामयमभिप्रायः, यथा एकमेव मुखं मुकुरभेदेषु प्रतिबिम्बितं विवर्त्तितं भवति, तथा स्वरा अपि श्रुतिभेदेषु स्थापिताः पृथक् पृथगिव विवर्त्तीभाव्यन्ते, यदुक्तं,—नराणान्तु मुखं यद्वत् दर्पणेषु विवर्त्तितम्। प्रतिभान्ति स्वरास्तद्वत् श्रुतिष्वेव विवर्त्तिताः ॥ इति। अपरे स्वरश्रुत्योः कार्य्यकारणभावमाचक्षते, तन्मते, यथा घटादौ मृत्पिण्डदण्डचक्रादि कारणं भवति, तथा नियत-पूर्व्ववर्त्तितया श्रुतीनां स्वरकारणत्वमिति, यदुक्तं;—स्वराश्च श्रुतिकार्य्यत्व-मिति केचित् वदन्ति हि। मृत्पिण्डदण्डकार्य्यत्वं घटस्येव यथा भवेत् ॥ इत्यलं शास्त्रार्थसमन्वयेन। ५७। ५८।

शुद्धाः सप्तस्वरास्ते च मन्द्रादिस्थानतस्त्रिधा ।
च्युताच्युतादिभेदेन विकृता द्वादशोदिताः ॥ ५८ ॥

---

एवं स्वरलक्षणमुक्त्वा तद्भेदानाह, शुद्धा इति ।—स्वराः प्रथमं शुद्धविकृत-भेदेन द्विविधाः । तत्र शुद्धाः सप्तस्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवत-निषादसंज्ञकाः, मन्द्रादिस्थानतः मन्द्रमध्यतारायां हृत्कण्ठमूर्द्धरूपस्थान-त्रयभेदात्, त्रिधा मन्द्रो मध्यस्तारश्चेति त्रिविधाः । काल्पनिकोऽयं मन्द्रादिभेदो न खलु वास्तविकः, तथाहि, यथा एकमेव जलम् आधारभेदात् क्वचित् आवर्त्तः, क्वचिद् बुद्बुदः, क्वचित् तरङ्गः, इति भिन्नरूपमिव प्रतीयते, तथा स्वरोऽपि हृत्कण्ठमूर्द्धरूपस्थानत्रयभेदात् क्वचिन्मन्द्रः, क्वचिन्मध्यः, क्वचित्तार इति भिन्नरूपतयावभासते । एवं शुद्धान् सप्तस्वरानुक्त्वा तेषां द्वादश विकारान् विभज्य दर्शयति, च्युतेति ।—ते शुद्धाः सप्तस्वराः, च्युताच्युतादि-भेदेन विकृताः सन्तः, द्वादशोदिताः ; स्वाधिष्ठानश्रुतिच्युतिरूपां विकृतिं स्वाधिष्ठानश्रुतिभ्योऽच्युता अपि नियमितश्रुतिसंख्यान्यूनतातिरेकादिरूपां वा विकृतिं प्राप्ताः सन्तः द्वादशसंख्यका भवन्तीत्यर्थः । यः स्वरो यस्यां श्रुताववस्थितः, तस्याः सकाशात् प्रच्युतश्चेत् तदा स च्युतः तस्यामेवावस्थितश्चेत् तदा सः अच्युत इति कथ्यते, विकृतत्वन्तु स्थानभूतश्रुतिच्युतिरूपकारणेन पूर्व्वश्रुति-संख्यान्यूनताधिक्यादिकारणेन वा भवति । एतदेव अनन्तरोक्तश्लोकैः प्रदर्शयन्नाह, चतुःश्रुतिरिति ।—चतुःश्रुतिः षड्जः, तीव्राकुमुद्वतीमन्दा-छन्दोवतीरूपश्रुतिचतुष्टयस्थायी षड्जः स्वर इत्यर्थः, यदा द्विश्रुतिर्भवेत् तदासौ विकृतः पूर्व्वश्रुतिहीनतया विकृतसंज्ञको भवतीत्यर्थः । तमेव विकारं दृष्टान्तेन स्फुटीकरोति, साधारणे इति ।—स षड्ज इति शेषः, साधारणे षड्जसाधारणे, च्युतः स्यात् स्थानभूतचतुर्थश्रुतिभ्रंशरूपं विकारं लभत इत्यर्थः, षड्जस्यायमेकविधो विकारः, विकारान्तरं यथा, स षड्जः काकलीत्वे निषादस्येति शेषः, अच्युतः सन्, स्वस्थानादच्युतोऽपि पूर्व्वश्रुतिद्वयहीनतारूपं विकारं लभते । तथाहि, षड्जसाधारणे निषादः षड्जस्य आद्यां श्रुतिं तीव्रां समाश्रयति, ततश्च षड्जस्य चान्तिमां श्रुतिं छन्दोवतीं समाश्रयति; इत्थं षड्जस्य स्थानभूतायां चतुर्थ्यां श्रुतौ

चतुःश्रुतिर्यदा षड्जो द्विश्रुतिर्विकृतस्तदा ।
साधारणे च्युतः स स्यात् काकलित्वेऽच्युतः स्मृतः ॥ ६० ॥
त्रिश्रुतिर्ऋषभः साधारणे षाड्जीं श्रुतिं श्रितः ।
चतुःश्रुतित्वमापन्नस्तदैको विकृतो भवेत् ॥ ६१ ॥

---

छन्दोवत्यां ऋषभेण अधिकृतायां सत्यां षड्जः स्वस्थानाद्भ्रष्टश्चतुर्थश्रुतिहीनश्च भवति, पुनरस्य प्रथमायां श्रुतौ तीव्रायां निषादेन अधिकृतायां सत्यां षड्जः प्रथमचतुर्थश्रुतिहीनो जायते; अतएव एवंविधस्थले षड्जः स्वस्थानच्युतिरूपं श्रुतिद्वयहीनतारूपञ्च विकारं भजते; अयमेव षड्जसाधारणे षड्जस्य विकारः। काकलीत्वेऽपि निषादः षड्जस्य पूर्वश्रुतिद्वयमाश्रयति, इत्थं चतुःश्रुतिकस्य षड्जस्य पूर्वश्रुतिद्वये निषादेन अधिकृते सति षड्जः स्वस्थाने चतुर्थश्रुतौ अवस्थानात् यद्यपि अच्युतो भवति, तथापि पूर्वश्रुतिद्वयहीनतया विकृतो भवति; अयमेव निषादस्य काकलीत्वे षड्जस्य विकार इति सर्व्वमवदातम्। निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत्। ऋषभश्चान्तिमां प्रोक्तं षड्जसाधारणं तदेत्यादिसाधारणविवरणं, यदा निषादसंयस्तु श्रुतिद्वयं समाश्रयेत्। षड्जस्यैव काकलीति तदासौ कथ्यते बुधैरित्यादिकाकलीविवरणञ्च तत्तत्प्रकरणे विस्तरेणाभिधास्ये । ५९ । ६० ।

एवं षड्जस्य साधारणकाकलीभेदेन विकारद्वयं दर्शयित्वा ऋषभस्य विकारं दर्शयति, त्रिश्रुतिरिति ।—त्रिश्रुतिः, दयावतीरञ्जनीरतिकाख्यश्रुतित्रयोपेत इत्यर्थः, ऋषभः, साधारणे षड्जसाधारणे (१) षाड्जीं षड्जसम्बन्धिनीं श्रुतिं श्रितः सन्, षड्जस्य अन्तिमां श्रुतिं छन्दोवतीं प्राप्य इत्यर्थः, अतएव चतुःश्रुतित्वमापन्नः आत्मनः श्रुतित्रयं षड्जस्य अन्तिमां श्रुतिञ्चेति श्रुतिचतुष्टयं प्राप्त इत्यर्थः, एकः एकविधः विकृतोभवेत्। ऋषभस्यायमेकविधो विकारः स्वकीयश्रुतिसंख्यातिरिक्ततयैव बोध्यम् । ६१ ।

---

(१) षड्जसाधारणं पूर्व्वोक्तं स्वरसाधारणम् ।

साधारणे मध्यमस्य गान्धारस्त्रिश्रुतिर्भवेत्।
स्वस्थानत्वे भवति चतुःश्रुतिरिति द्विधा ॥ ६२ ॥

---

एवं ऋषभस्यैकविधं विकारमुक्त्वा गान्धारस्य विकारद्वयं दर्शयति, साधारणे इति।—मध्यमस्य साधारणे गान्धारः त्रिश्रुतिर्भवेत्। रौद्री-क्रोधाख्यश्रुतिद्वयसम्पन्नोऽपि गान्धारः मध्यमसाधारणे मध्यमस्य प्रथमां श्रुतिं वज्रिकां गृह्णाति, एवं रौद्रीक्रोधावज्रिकाख्यश्रुतित्रयं प्राप्तः त्रिश्रुतिर्भवति, अत एवायं स्वकीयश्रुतिसंख्याधिक्याद् विकृतो जायते। विकारान्तरं यथा,—गान्धारः स्वस्य अन्तरत्वे चतुःश्रुतिर्भवेत्। अन्तरोऽपि गान्धारो मध्यमस्य वज्रिकां प्रसारिणीञ्चेति आद्यं श्रुतिद्वयं गृह्णन् त्रिश्रुतिरपि चतुःश्रुतिर्भवति, अत एवायं नियमितश्रुतिसंख्यातिरेकात् पूर्ववत् विकृतो जायते। इति त्रिश्रुतित्वचतुःश्रुतित्वभेदाद् गान्धारस्य द्विधा विकृतत्वं ज्ञेयम्। यदाश्रयति गान्धारो मध्यमस्य श्रुतिद्वयम्। तदासावन्तरः प्रोक्त इत्याद्यन्तरलक्षणं मध्यम-साधारणलक्षणञ्च तत्तत्प्रकरणे वक्ष्ये। ६२।

गान्धारस्य विकारद्वयमभिधाय मध्यमस्य षड्जवत् द्विधा विकृतत्वमाह, च्युतेति।—मध्यमः च्युताच्युतादिभेदेन षड्जवद्भवेत्, द्विधा विकृत इति शेषः। तावेव विकारौ दर्शयति, साधारणे इति। साधारणे मध्यमसाधारणे इत्यर्थः, अन्तरत्वे च गान्धारस्येति शेषः (१), त्रिश्रुतिः, चतुःश्रुतिकोऽपि गान्धारः श्रुतिद्वयेन हीनो भूत्वा इत्यर्थः, विकृतो भवेत्। षड्जो यथा षड्ज-साधारणे निषादस्य काकलीत्वे च च्युतत्वेन अच्युतत्वेन च द्विधा विकृतो भवति, तथा मध्यमः मध्यमसाधारणे गान्धारस्य अन्तरत्वे च च्युतत्वेन अच्युतत्वेन च द्विधा विकृतो भवतीत्यर्थः। तथाहि, मध्यमसाधारणे गान्धारो मध्यमस्य आद्यां श्रुतिं वज्रिकां गृह्णाति पञ्चमश्च मध्यमस्य अन्तिमां चतुर्थीं श्रुतिं मार्जनीं गृह्णाति; एवं मध्यमस्य प्रथमायां श्रुतौ वज्रिकायां गान्धारेण गृहीतायां, स्वस्थानभूतायां चतुर्थश्रुतौ मार्जन्यां च पञ्चमेन गृही-

---

(१) गान्धारो यदा मध्यमस्य आद्यां श्रुतिं समाश्रयति पञ्चमश्च अन्तिमां श्रुतिं समाश्रयति तदा म[illegible]ारणम्। गान्धारो यदा मध्यमस्य प्रथमां द्वितीयाञ्च श्रुतिं समाश्रयति, तदा म[illegible] अन्तरत्वम्।

च्युताच्युतादिभेदेन मध्यमः षड्जवद्भवेत् ।
साधारणेऽन्तरत्वे च विकृतिर्विकृता तदा ॥ १३ ॥
पञ्चमो मध्यमग्रामे त्रिश्रुतिर्जायते स्वरः ।
मध्यमस्य श्रुतिं प्राप्य कैशिके तु चतुःश्रुतिः ॥ १४ ॥

---

तायां, मध्यमः स्वस्थानस्य चतुर्थश्रुतेः सकाशात् प्रच्युतो भूत्वा तृतीयां श्रुतिं प्रीतिं समाश्रयति श्रुतिद्वयेन च हीनोभवति, अतएव मध्यमसाधारणे मध्यमस्य युगपत् स्थानच्युतिरूपा हीनतारूपा च विकृतिर्ज्ञेया । गान्धारस्य अन्तरत्वेऽपि गान्धारो मध्यमस्य प्रथमां श्रुतिं वज्रिकां द्वितीयां श्रुतिं प्रसारिणीञ्च गृह्णाति, एवं मध्यमस्य आद्ये श्रुतिद्वये गान्धारेण गृहीते मध्यमः स्वस्थाने चतुर्थश्रुतौ अवस्थानात् अच्युतोऽपि आद्यश्रुतिद्वयहीनतारूपं विकारं भजते, अतएव गान्धारस्य अन्तरत्वे मध्यमस्य केवला श्रुतिसंख्याहीनतारूपा विकृतिरिति सम्यगवदातम् । १३ ।

पञ्चमस्य द्वौ विकृतौ भेदौ दर्शयति, पञ्चम इति । पञ्चमः स्वरः मध्यमग्रामे (१) त्रिश्रुतिः सन् विकृतो जायते । तथाहि, पञ्चमस्य चतस्रः श्रुतयः, क्षितिः, रक्ता, सन्दीपनी, आलापिनी चेति ; मध्यमग्रामे तु पञ्चमः चतुर्थीं श्रुतिं आलापिनीं परित्यज्य तृतीयश्रुतौ सन्दीपन्यां तिष्ठति अन्त्यश्रुतिपरिहारात् त्रिश्रुतिश्च भवति ; एवमस्य स्वकीयश्रुतिसंख्याहीनतारूप एकविधो-विकारः । अन्यविधो विकारो यथा ;—कैशिके (२) मध्यमसाधारणे तु पञ्चमः मध्यमस्य श्रुतिम् अन्त्यामितिशेषः, प्राप्य, चतुःश्रुतिः सन् विकृतो भवतीतिशेषः । मध्यमग्रामे विकृतः पञ्चमश्चतुर्थश्रुतित्यागात् त्रिश्रुतिर्जात इति प्रागेवोक्तं, पुनरसौ मध्यमसाधारणे मध्यमस्य अन्त्यां श्रुतिं मार्ज्जनीं प्राप्य चतुःश्रुति-र्भवति । एवञ्च स्वकीयैकश्रुतित्यागेन परकीयैकश्रुतिग्रहणेन च यद्यप्यस्य श्रुतिसंख्यया न्यूनतातिरेको वा न भवति तथापि स्वाधिकारपरित्यागेन पराधिकारग्रहणादसौ विकृतो भवतीति ज्ञातव्यम् । १४ ।

---

(१) पञ्चमो यदि स्वस्य अन्तिमां चतुर्थीं श्रुतिं त्यक्त्वा तृतीयश्रुतौ तिष्ठति तदासौ मध्यमग्राम इत्युच्यते । तद्विवरणं तत्प्रकरणे द्रष्टव्यम् ।

(२) मध्यमसाधारणं षड्जसाधारणञ्चेति, द्वे साधारणे [illegible] कैशिके इत्युच्येते ।

**धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ॥ ६५ ॥**
**कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ॥ ६६ ॥**
**एतैश्च सप्तभिः शुद्धैर्भवन्त्येकोनविंशतिः ॥ ६७ ॥**

---

धैवतस्यैकविध एव विकारस्तमाह, धैवत इति ।—धैवतो मध्यमग्रामे चतुःश्रुतिः सन् विकृतः स्यात् । तथाहि, मध्यमग्रामे पञ्चमश्चतुर्थश्रुतिं विहाय तृतीयश्रुतिमधितिष्ठति, अस्य चतुर्थी श्रुतिश्च तदा अनन्तरं धैवतमेव प्रविशति, एवं त्रिश्रुतिरपि धैवतः पञ्चमस्य चतुर्थश्रुतिं लब्ध्वा चतुःश्रुतिर्जायते ; इत्थं परकीयश्रुतिलाभेनास्य श्रुतिसंख्यावर्द्धनमेवास्य विकारकारणमिति । ६५ ।

निषादस्य विकारद्वयं कथयति, कैशिक इति ।—निषादः, कैशिके षड्जसाधारण इतिशेषः, काकलीत्वे च सत्येतिशेषः, त्रिचतुःश्रुतिः, यथाक्रमं त्रिश्रुतिश्चतुःश्रुतिश्च भवतीत्यर्थः । तथाहि निषादः स्वयं द्विश्रुतिरपि षड्जसाधारणे षड्जस्य आद्यां श्रुतिं गृहीत्वा तत्रैव तिष्ठन् त्रिश्रुतिर्भवति, तदा च षड्जस्य प्रथमश्रुतिग्रहणेन स्वस्य श्रुतिसंख्याधिक्यात् विकृतोजायते । विकारान्तरं यथा ;—निषादः स्वस्य काकलीत्वे षड्जस्य आद्यं श्रुतिद्वयं गृहीत्वा स्वयं द्विश्रुतिरपि चतुःश्रुतिर्भवति, एवञ्च परकीयश्रुतिद्वयेन स्वकीयश्रुतिसंख्याया वर्द्धनादसौ विकृतोजायते । ६६ ।

विकृतस्वरनिरूपणमुपसंहरन्नाह, एतैरिति ।—एतैः द्वादशसंख्यकैः विकृतैः, सप्तभिः शुद्धैश्च स्वराः एकोनविंशतिर्भवन्ति । ६७ ।

स्वराणां वादिसंवाद्यनुवादिविवादिभेदात् पुनश्चातुर्विध्यमाह, वादीति । ते पूर्वोक्ताः स्वराः षड्जादयः वादादिभेदभिन्नाः सन्तः चतुर्विधाः कथिताः, वादित्वात् संवाद्यनुवादिविवादिनः । तत्र मुख्यतया प्रथमं वादिलक्षणमाह, रागेति ।—रागोत्पादनशक्तेः रागव्यक्त्युपाधायकधर्म्मस्य वदनं प्रतिपादनं, तद्योगात् वदनसम्बन्धात् वादी । वदति रागव्यक्तिं प्रतिपादयतीति वादीत्यर्थः । पुनस्तमेव विशिनष्टि, प्रयोगेति । असौ वादी प्रयोगे जातिरागादिव्यवहारे, बहुलत्वात् बाहुल्येन उच्चारितः, तथा, सर्व्वेषां संवादिविवाद्यनुवादिनां राजा राजेव मुख्यतया उपजीव्य इत्यर्थः,

| द्वादशानां विकृतस्वराणामवस्थाभेद-स्थान-श्रुतिसंख्याः। | | | | |
|---|---|---|---|---|
| ये स्वराः येषु अवस्थाभेदेषु विकृताः। | | यासु श्रुतिषु तिष्ठन्ति। | मूलगतया आश्रिताश्च या तेषां या श्रुतिसंख्या। | |
| षड्जः साधारणे विकृतः, च्युतः, षड्जः | (१) | मन्दायां | कुमुद्वती, मन्दा | द्विश्रुतिः |
| निषादस्य काकलीत्वे विकृतः, अच्युतः षड्जः | (२) | छन्दोवत्यां | मन्दा, छन्दोवती | द्विश्रुतिः |
| षड्जसाधारणे विकृतः, ऋषभः | (३) | रतिकायां | छन्दोवती, दयावती, रञ्जनी, रतिका | चतुःश्रुतिः |
| मध्यमसाधारणे विकृतः, गान्धारः | (४) | वज्रिकायां | रौद्री, क्रोधा, वज्रिका | त्रिश्रुतिः |
| स्वस्य अन्तरत्वे विकृतः, गान्धारः | (५) | प्रसारिण्यां | रौद्री, क्रोधा, वज्रिका, प्रसारिणी | चतुःश्रुतिः |
| मध्यमसाधारणे विकृतः, च्युतः, मध्यमः | (६) | प्रीत्यां | प्रसारिणी, प्रीतिः | द्विश्रुतिः |
| गान्धारस्य अन्तरत्वे विकृतः, अच्युतः मध्यमः | (७) | मार्जन्यां | प्रीतिः मार्जनी | द्विश्रुतिः |
| मध्यमग्रामे विकृतः, पञ्चमः | (८) | सन्दीपन्यां | क्षितिः, रक्ता, सन्दीपनी | त्रिश्रुतिः |
| कैशिके मध्यमसाधारणे विकृतः पञ्चमः | (९) | सन्दीपन्यां | मार्जनी, क्षितिः, रक्ता, सन्दीपनी | चतुःश्रुतिः |
| मध्यमग्रामे विकृतः धैवतः | (१०) | रम्यायां | आलापिनी, मदन्ती, रोहिणी, रम्या | चतुःश्रुतिः |
| कैशिके षड्जसाधारणे विकृतः, निषादः | (११) | तीव्रायां | उग्रा, क्षोभिणी, तीव्रा | त्रिश्रुतिः |
| स्वस्य काकलीत्वे विकृतः, निषादः | (१२) | कुमुद्वत्यां | उग्रा, क्षोभिणी, तीव्रा, कुमुद्वती | चतुःश्रुतिः |

| | |
|---|---|
| विकृताः स्वराः | १२ |
| शुद्धाः स्वराः | ७ |
| मिलिताः | १९ स्वराः |

## अथ वाद्यादिभेदाः।

वाद्यादिभेदभिन्नाश्चतुर्विधास्ते स्वराः कथिताः।
रागोत्पादनशक्तेर्वदनं तद्योगतो वादी ॥ ६८ ॥
बहुलस्वरः प्रयोगे भवति राजा च सर्व्वेषाम्।
श्रुतयोऽष्टौ द्वादश वा भवन्ति मध्ये ययोः स्वरयोः ॥६९॥
संवादिनौ तु कथितौ परस्परं तौ निषादगान्धारौ।
रिधयोर्विवादिनौ स्तस्तयोरिधौ वा विवादिनौ स्याताम् ॥७०॥

---

भवति। यः खलु बहुधा प्रयुक्तो रागोत्पत्तिनिबन्धं करोति स वादी स्वर इत्यर्थः। ६८।

संवादिलक्षणमाह, श्रुतय इति।—ययोः स्वरयोः मध्ये अन्तरे द्वादश अष्टौ वा श्रुतयः भवन्ति, तौ परस्परं संवादिनौ कथितौ। अस्यायमर्थः,— यौ स्वरौ ययोः श्रुत्योरवस्थितौ तयोरवस्थानश्रुत्योर्मध्ये यदि द्वादश अष्टौ वा श्रुतयस्तिष्ठन्ति तदा तौ स्वरौ अन्योन्यसंवदनात् परस्परं संवादिनौ; तथाहि षड्जः छन्दोवत्यां श्रुतौ तिष्ठति, मध्यमश्च मार्ज्जन्यां श्रुतौ तिष्ठति, अत्र छन्दोवतीमार्ज्जन्योर्मध्ये दयावती, रञ्जनी, रतिका, रौद्री, क्रोधा, वज्रिका, प्रसारिणी, प्रीतिश्च, इत्यष्टौ श्रुतयो भवन्ति, अतएव षड्जस्य संवादी मध्यमः, एवं द्वादशश्रुतिव्यवधानात् पञ्चमोऽपि षड्जस्य संवादी। एवं द्वादशश्रुति-व्यवधानात् ऋषभस्य संवादी धैवतः; द्वादशश्रुतिव्यवधानात् गान्धारस्य संवादी निषादः, एवमन्यत्रापि। विवादिलक्षणमाह, निषादेति।—निषाद-गान्धारौ रिधयोः ऋषभधैवतयोः विवादिनौ स्तः भवतः; रिधौ ऋषभधैवतौ वा तयोः निषादगान्धारयोः विवादिनौ स्याताम्। निषादगान्धारावन्येषां सर्व्वेषां स्वराणां विवादिनावित्येकः पक्षः, निषादगान्धारावृषभधैवतयोर्विवा-दिनाविति द्वितीयः, निषादगान्धारौ निषादगान्धारयोर्विवादिनाविति च तृतीयः पक्षः। एवमत्र पक्षत्रयं ज्ञेयम्। परस्परवादित्वसंवादित्वशून्यानामे-षामनुवादित्वमिति अनुवादिलक्षणं न पृथगुक्तम्। ६९। ७०।

तथा च रत्नाकरः ।

"चतुर्विधः स्वरो वादी संवादी च विवाद्यपि ।
अनुवादी च वादी तु प्रयोगे बहुलस्वरः ॥ ७१ ॥
श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ।
मिथः संवादिनौ तौ स्तो नि-गावन्यविवादिनौ ॥ ७२ ॥
रि-धयोरेव वा स्यातां तौ तयोर्वा रि-धावपि ।
शेषाणामनुवादित्वं स्वराणामुपजायते ॥ ७३ ॥"
वादी राजा स्वरस्तस्य संवादी स्यादमात्यवत् ।
शत्रुर्विवादी तस्य स्यादनुवादी तु भृत्यवत् ॥ ७४ ॥

[ इति वाद्यादिभेदाः ।

---

चतुर्विध इति । यथाहि लोके राज्यस्य व्यवस्थापनात् कश्चित् राजेत्युच्यते, तत्साहचर्य्यादपरो मन्त्रीत्युच्यते, अन्ये च छत्रचामरादिहस्ता राजशब्दं प्रतिपादयन्तो राजानुचरा इत्युच्यन्ते, तथा सङ्गीते राग-राज्यसंस्थापनाद्वादी राजेव, एवं रागात्मभूतं वादिनमुपकुर्व्वन् संवादी मन्त्रीव, उभयोरनुयायित्वात् स्वरूपोत्कर्षहेतुत्वाच्च अनुवादिनो राजानुचरा इवेति रत्नाकरोद्धृतश्लोकचतुष्टयस्यार्थः । रागप्रतिपादकत्वं वादित्वं, वाद्यनुसारित्वं संवादित्वं, वादिसंवाद्यनुसारित्वमनुवादित्वं, रागधर्म्मविनाशित्वञ्च विवादित्वमिति निष्कर्षः । ७१ । ७२ । ७३ । ७४ ।

ग्रामलक्षणमाह, ग्राम इति ।—मूर्च्छनादेः मूर्च्छनातानप्रभृतीनाम्, आश्रयः अवलम्बनभूतः, स्वरसमूहः, ग्रामः स्यात् । मूर्च्छनातानजाति-आलापात्मकः श्रुतिव्यवस्थासहितः स्वरसमूहो ग्राम इत्यर्थः । यथाहि लोके वासस्थान-सीमाविभाग-समाजबन्धन-जातिधर्म्म-सदाचार-सुनियमादि-परिपाटीविशिष्टानां जनानामेकत्र निवासेन कश्चित् ग्रामो भवति, तथा सङ्गीतेऽपि मूर्च्छना-तान-जाति-आलाप-इत्यादिव्यवस्थासहितानां स्वराणामेकत्रावस्थानेन षड्जादिग्रामो भवति । सुव्यवस्थस्वरसमूहो ग्राम इति

## अथ ग्रामः।

ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः समाश्रयः।
तौ द्वौ धरातले तत्र स्यात् षड्जग्राम आदिमः ॥ ७५ ॥
द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ॥ ७६ ॥
षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते।
स्वोपान्त्यश्रुतिसंस्थेऽस्मिन् मध्यमग्राम इष्यते ॥ ७७ ॥

---

संक्षेपः। ग्रामस्य भेदद्वयमाह, ताविति।—तौ ग्रामौ धरातले मनुष्यलोके द्वौ द्विविधौ। ग्रामस्य त्रैविध्येऽपि गान्धारग्रामस्य देवलोकावस्थानात् धरातले द्वौ ग्रामावित्युक्तं। तत्र तयोर्ग्रामयोर्मध्ये षड्जग्रामः आदिमः प्रधानः, स्यात्, उक्तञ्च मतङ्गेन ;—यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते॥ इति। ७५।

द्वितीय इति।—द्वितीयः मध्यमग्रामः, तयोः षड्जग्राममध्यमग्रामयोर्लक्षणम् उच्यते, वक्ष्यमाणश्लोके इति शेषः। ७६।

मुख्यतयादौ षड्जग्रामं लक्षयति, षड्जेति।—पञ्चमे स्वरे स्वचतुर्थश्रुतिसंस्थिते सति षड्जग्रामः स्यात्। अन्येषां स्वराणां षड्जादीनां विकृतत्वेऽपि यदि पञ्चमः स्वस्थाने चतुर्थश्रुतौ अविकृतभावेनावतिष्ठते तदैव षड्जग्राम इत्यर्थः। अथ पञ्चमस्याविकृतत्वकथनं मध्यमग्रामस्य व्यवच्छेदार्थं, मध्यमग्रामे हि पञ्चमः स्वस्थानभूतां चतुर्थश्रुतिं विहाय तत्समीपस्थां स्वकीयां तृतीयश्रुतिमधिष्ठाय विकृतो भवति। मध्यमग्रामस्य लक्षणमाह, स्वोपान्त्येति।—अस्मिंस्तु पञ्चमे स्वरे स्वस्य उपान्ते भवा उपान्त्या उपान्त्यश्रुति-समीपे वर्त्तमाना इति यावत्, या श्रुतिः स्वकीया तृतीया श्रुतिः, तत्संस्थे तत्र संस्थिते सति, मध्यमग्रामः इष्यते कथ्यते। पञ्चमो यदि स्वस्थानभूतां चतुर्थीं श्रुतिं विहाय तत्समीपे स्थितामात्मनस्तृतीयां श्रुतिं सन्दीपनीमाश्रित्य विकृतो भवति तदैव मध्यमग्राम इत्यर्थः। ७७।

पञ्चमप्राधान्येन ग्रामयोर्लक्षणमुक्त्वा पुनर्धैवतप्राधान्येन तौ लक्षयति, षड्जेति।—अथवा प्रकारान्तरे, षड्जे षड्जग्रामे, धैवतः त्रिश्रुतिः, मध्यमे मध्यम-

यदा धक्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ॥ ७८ ॥
रि-मयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रयेत् ।
प-श्रुतिं धोनिषादस्तु ध-श्रुतिं स-श्रुतिं श्रितः ॥ ७९ ॥
गान्धारग्राममाचष्ट तदा तं नारदोमुनिः ।
प्रवर्त्तते स्वर्गलोके ग्रामोऽसौ न महीतले ॥ ८० ॥

---

ग्रामे तु धैवतः चतुःश्रुतिः । तथाहि, मध्यमग्रामे यदा पञ्चमः स्वचतुर्थश्रुतिं-विहाय स्वतृतीयश्रुतौ तिष्ठति, तदा धैवतः स्वाधिकाराव्यवहितां पञ्चम-परित्यक्तां पञ्चमस्य चतुर्थश्रुतिं गृहीत्वा स्वयं चतुःश्रुतिर्भवतीति । ७८ ।

गान्धारग्रामं कथयति, रि-मयोरिति ।—चेत् यदि, गान्धारः स्वरः, रि-मयोः ऋषभमध्यमयोः, एकैकां श्रुतिं ऋषभस्य अन्तिमां मध्यमस्य च आदिमां श्रुतिमित्यर्थः, समाश्रयेत्, ऋषभमध्यमयोरेकैकश्रुतिग्रहणेन आत्मनः श्रुतिद्वयेन च गान्धारो यदि चतुःश्रुतिर्भवतीत्यर्थः, तथा, धः धैवतः प-श्रुतिं पञ्चमस्य अन्तिमां श्रुतिं, निषादस्तु ध-श्रुतिं धैवतस्य अन्तिमां श्रुतिं, स-श्रुतिं षड्जस्य च आदिमां श्रुतिं श्रितश्चेत्, तदा नारदोमुनिः तं तादृश-श्रुतिव्यवस्थोपलक्षितस्वरसमूहमित्यर्थः, गान्धारग्रामम् आचष्ट कथितवान् । अस्य विषय-प्रतिपादनार्थमाह, प्रवर्त्तत इति । असौ ग्रामः गान्धारग्रामः, स्वर्गलोके न तु महीतले, प्रवर्त्तते प्रचरति । उक्तञ्च नारदेन ;—षड्ज-मध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो [illegible]-योनिभिः ॥ इति । ७९ । ८० ।

ननु कथं सप्तसु स्वरेषु षड्जमध्यमगान्धाराणामेव ग्रामव्यपदेशभागित्वं नान्येषामित्यत आह, षड्जेति । आद्यत्वात् प्रथमत्वात्, तथा अमात्या-धिक्यतः अमात्यसदृशानां संवादिनाम् आधिक्यात्, षड्जः प्रधानं मुख्यः । अमात्याधिक्यन्तु अन्येषां स्वराणामेकैक एव स्वरः संवादी, षड्जस्यतु द्वौ मध्यमपञ्चमौ स्वरौ संवादिनाविति । मध्यमस्य ग्रामशब्दभागितानुरूपं प्राधान्यमाह, ग्राम इति । मध्यमस्तु अविलोपित्वात् षाड्वत्वे औडुवत्वे च आत्मनोलोपाभावात्, ग्रामे पुरःसरः प्रधानः, अविलोपित्वरूपप्राधान्येन

षड्जः प्रधानमाद्यत्वादस्मात्त्वाधिकृतस्तथा ।
ग्रामे स्यादविलोपित्वाच्चामस्तु ध्रुवःस्वरः ॥ ८१ ॥
क्रमात् ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः ।
एतत्कुलप्रसूतत्वाद्गान्धारोऽप्यग्रणीर्दिवि ॥ ८२ ॥
गीर्व्वाणकुलसम्भूताः षड्ज-गान्धार-मध्यमाः ।
पञ्चमः पितृवंशोत्थो रि-धावृषिकुलोद्भवौ ॥ ८३ ॥
निषादोऽसुरवंशोत्थोब्राह्मणाः स-म पञ्चमाः ।
रि-धौ तु क्षत्रियौ प्रोक्तौ वैश्यजाती नि-गौ मतौ ॥ ८४ ॥
शूद्रावन्तरकाकल्यौ क्रमेण कथितौ बुधैः ॥ ८५ ॥
पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभोऽसितः ।
पीतः कर्बूर इत्येषां जन्मभूमिमथो ब्रुवे ॥ ८६ ॥
जम्बुशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ।
द्वीपेषु पुष्करे चैते जाताः षड्जादयः क्रमात् ॥ ८७ ॥

---

ग्रामव्यपदेशमर्हतीत्यर्थः। ग्रामत्रये षड्जमध्यमगान्धाररूपे, क्रमात् यथा-क्रमं ब्रह्मविष्णुमहेश्वराः देवाः सन्तीति शेषः। एतत्कुलप्रसूतत्वात् एतयोः षड्जमध्यमयोः कुले जातत्वात् गान्धारोऽपि दिवि देवलोके अग्रणीः प्रधानः। एतेषामन्यस्वरापेक्षया तादृशवैशिष्ट्यादेव ग्रामत्वव्यपदेश इति भावः।८१।८२।

अनन्तरोक्तैः श्लोकैः स्वराणामन्वय-जाति-वर्ण-जन्मभूमि-दर्शकर्षि-देवता-छन्दो-रसादयो वर्णिताः। तथाहि ;—षड्जस्य देवकुले उत्पत्तिः, ब्राह्मणोजातिः, पद्माभोरक्तोवर्णः, जम्बुद्वीपे जन्म, वह्नि ऋषिः, अग्निर्देवता, अनुष्टुप् छन्दः, वीराद्भुतरौद्ररसेषूपयोगिता। ऋषभस्य ऋषिवंशे उत्पत्तिः, क्षत्रियो जातिः, ईषत्पीतोवर्णः, शाकद्वीपे जन्म, ऋषिर्वंशा, ब्रह्मा देवता, गायत्री छन्दः, वीराद्भुतरौद्रेषु उपयोगित्वम्। गान्धारस्य देवान्वये सम्भूतिः, वैश्योजातिः, स्वर्णवदुज्ज्वलपीतोवर्णः, कुशद्वीपे जन्म, ऋषिः

## अथ मूर्च्छना।

क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्।
मूर्च्छनेत्युच्यते ग्रामत्रये ताः सप्त सप्त च ॥ ८२ ॥
स्थानत्रयसमायोगे मूर्च्छनारम्भसम्भवः ॥ ८३ ॥

---

आरोहणावरोहेण क्रमेण स्वरसप्तकम्। मूर्च्छनाशब्दवाच्यं हि विज्ञेयं तद्विचक्षणैः ॥ निष्पन्नो मूर्च्छनाशब्दो मूर्च्छा मोहसमुच्छ्रये। मूर्च्छते येन रागोऽपि मूर्च्छनेत्यभिसंज्ञिता ॥ इति। एतेन व्युत्पत्तिरपि दर्शिता। संमूर्च्छितो रागतां प्रतिपद्यमानः स्वरो मूर्च्छनेति सङ्गीतदामोदरः ; यदुक्तं,—स्वरः संमूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तामाहुः कवयो-ग्रामसम्भवाम् ॥ इति। वाद्यस्य गानस्य वा समये यत्र स्वरस्य ग्रामस्य वा कम्पनं सा मूर्च्छनेति भरतः। हनुमन्मते,—षड्जादिस्वरत ऋषभादिस्वरोत्थाने यत्र स्वरो विरमति सा मूर्च्छनेति। ता मूर्च्छना इति शेषः, ग्रामत्रये षड्जमध्यमगान्धारग्रामत्रये, सप्त सप्त च भवन्तीति शेषः। तथाहि, षड्जग्रामे सप्त मूर्च्छनाः, मध्यमग्रामे सप्त मूर्च्छनाः, गान्धारग्रामे च सप्त मूर्च्छनाः इति। ८२।

अथ मूर्च्छनारम्भप्रकारमाह, स्थानेति।—स्थानत्रयसमायोगे मन्द्रमध्यताररूपस्थानत्रयसंयोगे मूर्च्छनाया आरम्भस्य सम्भवः उत्पत्तिः, मन्द्रादिस्थानस्थितषड्जादिभिः प्रत्येकग्रामस्य प्रथमादिमूर्च्छना आरभ्यन्ते इत्यर्थः। षड्जग्रामस्य सप्तानां मूर्च्छनानामारम्भप्रकारमाह, तत्रेति। तत्र, मध्यषड्जेन मध्यस्थानस्थितेन षड्जस्वरेण षड्जग्रामस्य प्रथमा मूर्च्छना आरभ्यते। षड्जग्रामस्य इयं प्रथमा मूर्च्छना या षड्जात् सप्तमस्वरपर्य्यन्तमारोहणरूपा, तत्र निषादात् षड्जपर्य्यन्तमवरोहणरूपा। एवमेव द्वितीयादिसप्तमान्ताः षट् मूर्च्छना इति शेषः, तत्रत्यैः मन्द्रस्थानस्थषड्जा-

तत्र मध्यस्थषड्जेन षड्जग्रामस्य मूर्च्छना।
प्रथमारभ्यतेऽन्यास्तु निषादाद्यैरधस्तनैः ॥ ९४ ॥
मध्यमध्यममारभ्य मध्यमग्राममूर्च्छना।
आद्याऽन्यास्तदधोऽधःस्थस्वरानारभ्य षट् क्रमात् ॥ ९५ ॥
षड्जेतूत्तरमन्द्राद्या रजनी चोत्तरायता।
शुद्धषड्जा मत्सरीकृताऽश्वक्रान्ताभिरुद्गता ॥ ९६ ॥
सौवीरी मध्यमग्रामे हारिणाश्वा ततोऽपरा।
स्यात् कलोपनता शुद्धमध्या मार्गी च पौरवी।
हृष्यका सप्तमी प्रोक्ता मूर्च्छनेत्यभिधा इमाः ॥ ९७ ॥

---

दधः अपकृष्टस्थाने स्थितैरित्यर्थः, निषादाद्यैः मन्द्रनिषादधैवतादिभिः मन्द्रर्षभपर्य्यन्तैरित्यर्थः, कर्त्तव्याः । ९३ । ९४ ।

मध्यमग्रामस्य मूर्च्छनानामारम्भप्रकारमाह, मध्येति।—आद्या मध्यमग्राममूर्च्छना मध्यमग्रामस्य प्रथमा मूर्च्छना, मध्यमध्यममारभ्य मध्यस्थानस्थितं मध्यमस्वरमारभ्य भवेदिति शेषः। अन्याः द्वितीयादयः षट् मूर्च्छनाः, क्रमात् तदधोऽधःस्थस्वरान्, तस्य मध्यस्थानस्थितस्य मध्यमस्य अधोऽधःस्थाः अपकृष्टापकृष्टतरादिस्थानस्थिता ये गान्धारर्षभादयो मन्द्रपञ्चमपर्य्यन्ताः स्वराः, तानारभ्य कार्य्याः । ९५ ।

अनन्तरोक्तैस्त्रिभिः श्लोकैः प्रत्येकग्रामस्थितमूर्च्छनानामान्याचष्ट । तानि यथा ;—षड्जग्रामस्य प्रथमा मूर्च्छना उत्तरमन्द्रा, द्वितीया रजनी, तृतीया उत्तरायता, चतुर्थी शुद्धषड्जा, पञ्चमी मत्सरीकृता, षष्ठी अश्वक्रान्ता, सप्तमी अभिरुद्गता। मध्यमग्रामस्य प्रथमा मूर्च्छना सौवीरी, द्वितीया हारिणाश्वा, तृतीया कलोपनता, चतुर्थी शुद्धमध्या, पञ्चमी मार्गी, षष्ठी पौरवी, सप्तमी हृष्यका। गान्धारग्रामस्य प्रथमा मूर्च्छना नन्दा, द्वितीया विशाला, तृतीया सुमुखी, चतुर्थी विचित्रा, पञ्चमी रोहिणी, षष्ठी सुखा, सप्तमी आलापा चेति ग्रामत्रयगताः साकल्येन एकविंशतिर्मूर्च्छनाः। मता-

नन्दा विशाला सुमुखी विचित्रा रोहिणी सुखा।
आलापा चेति गान्धारे ग्रामे स्युः सप्त मूर्च्छनाः॥ ९८॥
ताश्च स्वर्गे प्रयोक्तव्या विशेषादत्र नोदिताः॥ ९९॥
पृथक् चतुर्विधाः शुद्धाः काकलीकलितास्तथा।
सान्तरास्तद्द्वयोपेताः षट्पञ्चाशत्तु मूर्च्छनाः॥ १००॥
यदा निषादसंज्ञश्च श्रुतिद्वन्द्वं समाश्रयेत्।
षड्जस्यैव काकलीति तदाऽसौ कथ्यते बुधैः॥ १०१॥

---

न्धारे ललिता, मध्यमा, चित्रा, रोहिणी, मतङ्गजा, सौवीरी, षड्जमध्या चेति षड्जग्रामस्य मूर्च्छनाः। पञ्चमा, मत्सरी, मृदुमध्या, शुद्धा, अन्ता, कलावती, तीव्रा चेति मध्यमग्रामस्य मूर्च्छनाः। रौद्री, ब्राह्मी, वैष्णवी, खेदरी, सुरा, नादावती, विशाला चेति गान्धारग्रामस्य मूर्च्छनाः। ९६। ९७। ९८।

ताश्चेति।—ताः गान्धारग्रामोक्ता मूर्च्छनाः स्वर्गे प्रयोक्तव्याः, गान्धारग्रामस्य स्वर्गे प्रचारादित्यर्थः, अत्र ग्रन्थे विशेषात् विस्तरेण न उदिताः कथिताः, अनपेक्षितत्वात् न विस्तरेण लिखिता इत्यर्थः। ९९।

षड्जमध्यमग्रामस्थानां चतुर्दशानां मूर्च्छनानां चातुर्विध्यमाह, पृथगिति।—ग्रामद्वयस्थचतुर्दशमूर्च्छनाः, पृथक् प्रत्येकं, शुद्धाः, काकलीकलिताः काकलीसहिताः, सान्तराः अन्तरसहिताः, तथा तद्द्वयोपेताः काकल्यन्तरसहिताः, अतएव षट्पञ्चाशत्संख्यकाः भवन्ति। १००।

काकलीलक्षणमाह, यदेति।—निषादसंज्ञः स्वरः यदा, षड्जस्यैव सम्बन्धिनावः, श्रुतिद्वन्द्वं श्रुतिद्वयं समाश्रयेत् गृह्णाति, तदा असौ काकली इति बुधैः कथ्यते। निषादो यदि षड्जस्य द्वितीयश्रुतौ तिष्ठन् षड्जेन श्रुतिद्वयेन आत्मनश्च श्रुतिद्वयेन चतुःश्रुतिर्भवति तदा काकलीत्यर्थः। निषादस्यैव काकलीत्वं ज्ञातव्यम्। १०१।

यदाश्रयति गान्धारो मध्यमस्य श्रुतिद्वयम् ।
तदासावन्तरः प्रोक्तो मुनिभिर्ऋतुसन्धिवत् ॥ १०२ ॥
मूर्च्छनायां यावतिथौ भवेतां षड्ज-मध्यमौ ।
ग्रामयोस्तावतिथ्येव मूर्च्छना सा प्रकीर्त्तिता ॥ १०३ ॥

---

अन्तरस्वरलक्षणमाह, यदेति ।—गान्धारो यदा मध्यमस्य श्रुतिद्वयं आश्रयति गृह्णाति, तदा असौ ऋतुसन्धिवत् ऋतुसन्धिरिव, मुनिभिः अन्तरः प्रोक्तः । गान्धारो यदि मध्यमस्य श्रुतिद्वयेन आत्मनश्च श्रुतिद्वयेन चतुःश्रुतिर्जायते तदा अन्तर इत्यर्थः । ऋतुसन्धिवदिति, यथा एकस्य ऋतोरन्त्यभागेन तत्परवर्त्तिनः ऋतोराद्यभागेन च एकः ऋतुसन्धिर्भवति, तथा अन्तरस्वरोऽपि गान्धारस्य श्रुतिद्वयेन मध्यमस्य आद्येन श्रुतिद्वयेन च भवतीति । अन्तरस्वरत्वं गान्धारस्यैव नान्यस्य स्वरस्य । १०२ ।

मूर्च्छनायामिति ।—ग्रामयोः षड्जग्राममध्यमग्रामयोः, यस्यां मूर्च्छनायां यावतिथौ यावतां पूरणौ यावतिथः, यावत्संख्यापूरणावित्यर्थः, षड्जमध्यमौ स्वरौ भवेतां सा मूर्च्छनापि तावतिथी तावतां पूरणी, तावत्संख्यापूरणीत्यर्थः, बहुगणपूगसङ्घातोस्तिथट् तस्योपचेति पूरणे तिथट्प्रत्ययः । तथाहि यदि षड्जग्रामस्य मूर्च्छनासु षड्जस्वरः प्रथमः स्यात् तदा मूर्च्छनापि प्रथमा भवेत्, यदि षड्जस्वरो द्वितीयस्तदा मूर्च्छनापि द्वितीया स्यात्, एवं तृतीयाद्या मूर्च्छनाः । इत्थं मध्यमग्रामस्य मूर्च्छनासु यदि मध्यमः स्वरः प्रथमः स्यात् तदा मूर्च्छनापि प्रथमा भवेत्, एवं द्वितीयाद्यो मूर्च्छनाः । परिमाणवाचिनो वतुबन्तात् यावच्छब्दात् तावच्छब्दाच्च पूरणार्थे तिथट्प्रत्ययेन यावतिथतावतिथशब्दौ निष्पन्नौ । १०३ ।

प्रथमेति ।—एकैका मूर्च्छना षट्पञ्चाशत्संख्यकानां मूर्च्छनानां प्रत्येकमित्यर्थः, प्रथमादिस्वरारम्भात् प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्तम-स्वरारम्भाद्धेतोः सप्तधा सप्तप्रकारा भवेत् । तासु मूर्च्छनासु चरमस्वरान्तान् अन्तिमस्वरपर्यन्तम् उच्चार्य, क्रमात् स्वरभेदक्रमानुसारेण, पूर्वान् पुनरपि

**प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ।**
**तामुच्चार्य्याग्रिमस्वरांस्तान् पूर्वानुच्चारयेत् क्रमात् ॥ १०४ ॥**
**ते क्रमाः कथितास्तेषां संख्या नेत्राङ्करामतः ॥ १०५ ॥**

---

पूर्वस्वरान् उच्चारयेत्; द्वितीयादिस्वरारम्भे क्रमेण एकैकस्य स्वरस्य न्यूनत्वेऽपि पुनरपि पूर्वपूर्वस्वरोच्चारणेन तत्पूरणात् सप्तस्वरत्वं न व्याहन्यते । १०४ ।

साकल्येन मूर्च्छनाभेदानाह, त इति ।—ते पूर्वोक्ताः क्रमाः स्वरभेदक्रमानुसारेण मूर्च्छनाभेदा इत्यर्थः। तेषां मूर्च्छनाभेदानां नेत्राङ्करामतः (२९३) अङ्कस्य वामा गतिरतः (३९२) संख्या भवति। तथाहि षड्जग्रामे सप्त मूर्च्छनाः, मध्यमग्रामे च सप्त मूर्च्छनाः इति चतुर्द्दश मूर्च्छनाः, ताश्चतुर्द्दश पुनरपि प्रत्येकं शुद्धत्वेन, काकलीसहितत्वेन, सान्तरत्वेन, काकल्यन्तरोपेतत्वेन च मिलित्वा षट्पञ्चाशत्संख्यका भवन्ति। तासां षट्पञ्चाशन्मूर्च्छनानाम् एकैकस्य पुनरपि प्रथमादिस्वरारम्भात् सप्तविधत्वात् षट्पञ्चाशन्मूर्च्छनाः सप्तगुणा भवन्तीति मूर्च्छनाभेदाः (५६ × ७ = ३९२) द्विनवत्यधिकशतत्रयसंख्यका भवन्ति। १०५।

शुद्धतानान् कथयति, यदेति ।—यदा तु शुद्धाः मूर्च्छनाः षाड़वाः षड्भिः स्वरैरुच्चारिताः, औड़वितीकृताः पञ्चभिः स्वरैरुच्चारिताश्च भवन्ति, तदा तु शुद्धतानाः स्युर्भवेयुः, षट्स्वरीकृताः पञ्चस्वरीकृताश्च मूर्च्छनाः शुद्धतानव्यपदेशभाजो भवन्तीत्यर्थः। शुद्धग्रहणं कूटतानव्यवच्छेदार्थम्। तत्र षड्जजाः षड्जग्रामस्थाः सप्त मूर्च्छनाः, यदा क्रमात्, स-रि-प-सप्तमैः षड्जर्षभपञ्चमसप्तमैः स्वरैः हीनाः भवेयुस्तदाः षाड़वास्तानाः अष्टाविंशतिः परिकीर्त्तिताः। तथाहि, षड्जग्रामस्थाः सप्त मूर्च्छनाः यदा षड्जेन हीनास्तदा सप्त तानाः, यदा ऋषभेण हीनास्तदा सप्त तानाः, यदा पञ्चमेन हीनास्तदा सप्त तानाः, यदा सप्तमस्वरेण निषादेन हीनास्तदा सप्त तानाः, एवं मिलिताः अष्टाविंशतिसंख्यका भवन्ति। एवं मध्यमग्रामे यदा तु सप्त मूर्च्छनाः क्रमात् स-रि-गोज्झिताः षड्जर्षभगान्धारस्वरैर्हीनाः भवन्ति तदा षाड़वास्तानाः

यदा तु मूर्च्छनाः शुद्धाः षाड़वौड़वितीकृताः।
तदा तु शुद्धतानाः स्युः मूर्च्छनाख्याश्च षड्जगाः॥ १०६॥
सप्त क्रमाद्यदा हीनाः स्वरैः स-रि-प-सप्तमैः।
तदाऽष्टाविंशतिस्तानाः षाड़वाः परिकीर्त्तिताः॥ १०७॥
यदा तु मध्यमग्रामे मूर्च्छनाः स-रि-गोज्झिताः।
सप्त क्रमाद्यदा तानाः स्युस्तदा त्वेकविंशतिः।
एवमेकोनपञ्चाशन्मिलिताः षाड़वा मताः॥ १०८॥

---

एकविंशतिः स्युः। तथाहि, मध्यमग्रामस्थाः सप्त मूर्च्छना यदा षड्जेन हीनास्तदा सप्त तानाः, यदा ऋषभेण हीनास्तदा सप्त तानाः, यदा गान्धारेण हीनास्तदा सप्त तानाः, एवं मिलिताः एकविंशतिः षाड़वास्तानाः पुनरपि पूर्व्वोक्तैरष्टाविंशतिसंख्यकैः सह मिलिताः साकल्येन एकोनपञ्चाशन्मताः। १०६। १०७। १०८।

षाड़वांस्तानान् निरूप्य औड़वांस्तानान् विभजते, स-पाभ्यामित्यादि।— षड्जग्रामे सप्त मूर्च्छना इत्यनुषङ्गः, स-पाभ्यां षड्जपञ्चमाभ्यां, तथा त्रिश्रुतिभ्यां गान्धारनिषादाभ्यामित्यर्थः, तथा रि-पाभ्यां ऋषभपञ्चमाभ्यां वर्जिताः यदा भवन्तीति शेषः, तदा एकविंशतिसंख्यकाः पृथक् औड़वास्तानाः भवन्ति। तथाहि, षड्जग्राममूर्च्छना यदा षड्जपञ्चमाभ्यां हीनास्तदा सप्त औड़वास्तानाः, यदा गान्धारनिषादाभ्यां हीनास्तदा सप्त औड़वास्तानाः, यदा ऋषभधैवताभ्यां हीनास्तदा सप्त औड़वास्तानाः इति मिलिताः एकविंशतिरौड़वास्तानाः। एवं मध्यमग्राममूर्च्छना यदा त्रिश्रुतिभ्यां ऋषभधैवताभ्यामित्यर्थः, तथा द्विश्रुतिभ्यां गान्धारनिषादाभ्यामित्यर्थः, हीना भवन्ति, तदा औड़वास्तानाश्चतुर्द्दश समीरिताः कथिताः। तथाहि, मध्यमग्राममूर्च्छना यदा ऋषभधैवताभ्यां हीनास्तदा सप्त औड़वास्तानाः, यदा गान्धारनिषादाभ्यां हीनास्तदा सप्त औड़वास्तानाः इति मिलिताश्चतुर्द्दशसंख्यकाः भवन्ति। पूर्व्वं एकविंशतिरौड़वास्तानाः कथिताः, पुनरपि चतुर्द्दश दर्शिताः,

स-पाभ्यां द्विश्रुतिभ्याञ्च रि-पाभ्यां सप्त वर्जिताः ।
षड्जग्रामे पृथक् ताना एकविंशतिरौड़वाः ॥ १०९ ॥
त्रिश्रुतिभ्यां द्विश्रुतिभ्यां मध्यमग्राममूर्च्छनाः ।
यदा हीनास्तदा तानाश्चतुर्द्दश समीरिताः ॥ ११० ॥
औड़वा मिलिताः पञ्चत्रिंशद्ग्रामद्वये स्थिताः ।
सर्व्वे चतुरशीतिः स्युर्मिलिताः षाड़वौड़वाः ॥ १११ ॥
[ इति शुद्धतानविवेकः ।

## कूटतानाः ।

असम्पूर्णाश्च सम्पूर्णा व्युत्क्रमोच्चारितस्वराः ।
मूर्च्छनाः कूटतानाः स्युरिति शास्त्रविनिर्णयः ॥ ११२ ॥
पूर्णाऽपूर्णादिसङ्ख्याश्च पुनश्चापसारणाः ।
मूर्च्छनाः कूटतानाः स्युस्तेषां संख्याऽभिधीयते ॥ ११३ ॥

---

इति मिलिता साकल्येन पञ्चत्रिंशत् औड़वतानाः । पूर्व्वम् एकोनपञ्चाशत् षाड़वतानाः निरूपिताः, अधुना च पञ्चत्रिंशत् औड़वतानाः कथिताः, एवं षाड़वौड़वभेदेन सर्व्वे तानाः (४९+३५=८४) चतुरशीतिसंख्यका-भवन्ति । १०९ । ११० । १११ ।

शुद्धतानानुक्त्वा कूटतानान् निरूपयति, असम्पूर्णा इति ।—असम्पूर्णाः सम्पूर्णाश्च यावत्यो मूर्च्छनास्ताः व्युत्क्रमेण पूर्व्वापरक्रमवैपरीत्येन उच्चारिताः गीताः स्वराः यासु ताः, तथाविधाः सत्यः, कूटतानाः स्युर्भवेयुः । इति शास्त्र-विनिर्णयः सङ्गीतशास्त्रज्ञानामिदं मतमित्यर्थः । ११२ ।

पूर्णेति ।—पूर्णा या मूर्च्छनाः, अपूर्णरूपाश्च या मूर्च्छनाः, तथा पुनश्चाप-सारणाः 'तासूच्चार्य्यान्यस्वरान्तान् पूर्व्वानुच्चारयेत् क्रमात्,' इत्युक्तदिशा पुनरुच्चारितस्वररूपा या मूर्च्छनाः, तथा पूर्णापूर्णाद्यपरक्रमस्वररूपाश्च या मूर्च्छनाः, ताः सर्व्वाः कूटतानाः स्युः । तेषां पूर्णापूर्णादिभेदभिन्नानामित्यर्थः संख्या अभिधीयते कथ्यमानश्लोकैरिति शेषः । ११३ ।

पूर्णाः पञ्च सहस्राणि चत्वारिंशद्युतानि च ।
एकैकस्यां मूर्च्छनायां कूटतानाः सप्त क्रमैः ॥ ११४ ॥
षट्पञ्चाशन्मूर्च्छनाः स्युः पूर्णाः कूटास्तु योजिताः ।
लक्षद्वयं सहस्राणि द्व्यशीतिर्द्वे शते तथा ।
चत्वारिंशच्च संजाताः, अथाऽपूर्णान् प्रचक्ष्महे ॥ ११५ ॥

---

प्रतिमूर्च्छनं पूर्णकूटतानसंख्यामाह, पूर्णा इति ।—एकैकस्यां मूर्च्छनायां प्रतिमूर्च्छनमित्यर्थः, क्रमैः सह, प्रतिमूर्च्छनं प्रस्तारे क्रियमाणे सप्त क्रमा-भवन्तीति सप्तभिः क्रमैः सह, पूर्णाः कूटतानाः, (१ × २ × ३ × ४ × ५ × ६ × ७ = ५०४०) चत्वारिंशद्युतानि पञ्च सहस्राणि (५०४०) स्युः । मतङ्गदत्तिला-दयस्तु सप्त क्रमान् विहाय (५०४० — ७ = ५०३३) त्रयस्त्रिंशदधिकानि पञ्च-सहस्राण्याहुः । ११४ ।

षट्पञ्चाशदित्यादिश्लोकेन सर्व्वासां मूर्च्छनानां २८२२४०संख्यकान् पूर्णकूटतानान् कथितवान् । यथा ;—पूर्व्वश्लोके प्रतिमूर्च्छनं ५०४० पूर्णकूट-तानाः कथिताः । अतएव यदि एकैकस्यां मूर्च्छनायां ५०४० पूर्णकूटतानाः भवन्ति, तदा (५६) षट्पञ्चाशन्मूर्च्छनासु (१) (५०४० × ५६) षट्पञ्चाशता गुणितानि चत्वारिंशदधिकानि पञ्च सहस्राणि, (५०४० × ५६ = २८२२४०) लक्षद्वयं द्व्यशीतिः सहस्राणि, द्वे शते, चत्वारिंशच्च पूर्णकूटताना-निष्पद्यन्ते । ११५ ।

अपूर्णान् कूटतानान् निरूपयति, एकैकेत्यादि ।—एकैकान्त्यान्त्यविरहात् ग्रामद्वये पूर्णानां मूर्च्छनानां एकैकान्त्यस्वरापकर्षादित्यर्थः, षट्स्वरादयः षट् भेदा भवन्ति । आदिशब्दात् पञ्चस्वर-चतुःस्वर-त्रिस्वर-द्विस्वरैकस्वराः । तथाहि, अन्त्यस्वरापकर्षेण षट्स्वराः, अन्त्यस्वरद्वयापकर्षेण पञ्चस्वराः, अन्त्यस्वरत्रयापकर्षेणः चतुःस्वरा, अन्त्यस्वरचतुष्टयापकर्षेण त्रिस्वराः,

---

(१) ग्रामद्वयस्य चतुर्दश मूर्च्छनाः शुद्धत्वेन, काकलीकलितत्वेन, सान्तरत्वेन, काकल्यन्तरोपेतत्वेन च षट्पञ्चाशत्संख्यकाः भवन्तीति प्राचीनोक्तम् ।

एवैकान्यान्यविच्छेदाद् भेदाः षट् षट्स्वरादयः ।
एकस्वरोऽत्र निर्भेदोऽप्युक्तो गानादिसिद्धये ॥ ११६ ॥
क्रमाश्च कूटतानत्वेऽप्युक्तास्तेषूपयोगिनः ॥ ११७ ॥
स्युः षाडवानां विंशत्या सह सप्तशतानि च ।
औडवानान्तु विंशत्या सहितं शतमुच्यते ॥ ११८ ॥

---

अन्यस्वरपञ्चकापकर्षेण द्विस्वराः, अन्यषट्स्वरापकर्षेण च एकस्वरा इति । एकस्वरः अत्र निर्भेदोऽभेदरहितः, तथापि गानादिसिद्धये अयमेको भेदमात्र-गत्योद्दिष्टपरिज्ञानार्थं, उक्तः कथितः, अन्यथा एकस्वराणां प्रस्ताराभावेन भेदराहित्यात् तदुपादानमत्र निरर्थकं स्यात् । ११६ ।

क्रमाश्चेत्यादि ।—क्रमाश्च तेषु कूटतानेषु उपयोगिनो नितरामावश्यकाः, अतएव कूटतानत्वे उक्ताः कथिताः, क्रमाणां कूटतानत्वाभावेऽपि क्रमस्थाना-न्तरे स्थाप्यः इत्युक्तदिशा क्रमैर्विना कूटतानानां परिज्ञानं न सम्भवतीति तेषां कूटतानत्वे उपादानं कृतम् । ११७ ।

स्युः षाडवानामित्यादिश्लोकैः षट्स्वरादीनां कूटतानानां संख्यामाम-न्याचष्ट । तथाहि, षट्स्वराणां ( षाडवानां ) प्रस्तारे कृते ( १ × २ × ३ × ४ × ५ × ६ = ७२० ) विंशत्या सहितानि सप्तशतानि भेदा भवन्ति । पञ्च-स्वराणां ( औडवानां ) प्रस्तारे कृते ( १ × २ × ३ × ४ × ५ = १२० ) विंशत्या सहितं शतं भेदा भवन्ति । चतुःस्वराणां कूटानां प्रस्तारे कृते ( १ × २ × ३ × ४ = २४ ) चतुर्विंशतिभेदा भवन्ति । त्रिस्वराणां प्रस्तारे कृते ( १ × २ × ३ = ६ ) षट् भेदा भवन्तिः । द्विस्वराणां प्रस्तारे ( १ × २ = २ द्वौ भेदौ भवतः । एकस्वरप्रस्तारे एकएव भेदः । तत्र षट्स्वरः षाडव-इत्युच्यते, पञ्चस्वर औडवः, चतुःस्वरः स्वरान्तरः, त्रिस्वरः सामिकः, द्विस्वरो गाथिकः, एकस्वरश्च आर्चिक इत्युच्यते । यदुक्तं नारदेन, एकस्वरप्रयोगोहि आर्चिकस्त्वभिधीयते । गाथिकोद्विस्वरोज्ञेयस्त्रिस्वरश्चैव

चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः ।
त्रिस्वराः षट् द्विस्वरौ द्वौ एक एकस्वरो मतः ॥ ११९ ॥
आर्चिकोगाथिकश्चैव सामिकोऽथ स्वरान्तरः ।
एकस्वरादितानानां चतुर्णामभिधा क्रमात् ॥ १२० ॥
उक्ताः शुद्धादिभेदेन नि-ग-युक्ताश्चतुर्विधाः ।
तयोरेकैकहीनास्ते द्वेधा मूलक्रमा मताः ॥ १२१ ॥

---

सामिकः। चतुःस्वरप्रयोगोऽपि स्वरान्तरक उच्यते। औड़वः पञ्चभिश्चैव षाड़वः षट्स्वरो भवेत्। सम्पूर्णः सप्तभिश्चैव विज्ञेयो गीतयोक्तृभिः ॥ इति ।११८।११९।१२०।

एवं षाड़वादीनां कूटतानानां क्रमैः सह भेदसंख्यामुक्त्वा षाड़वक्रमसंख्यार्थमाह, उक्ता इति ।—नि-ग-युक्ता निषादगान्धारयुक्ताः, षाड़वाः क्रमा इति शेषः, शुद्धादिभेदेन चतुर्विधाः उक्ताः। तयोर्निषादगान्धारयोरिति शेषः, एकैकहीनाः निषादेन गान्धारेण वा हीनाः सन्तः, मूलक्रमा द्वेधा मताः। तथाहि, ग्रामद्वयस्य चतुर्दश मूर्च्छना यदा अन्तिमस्वरापकर्षेण षाड़वाः क्रमा भवन्ति तदा ते क्रमा निषादगान्धारयुक्ताः सन्तः शुद्धत्वेन काकलीकलितत्वेन सान्तरत्वेन तद्द्वयोपेतत्वेन च चतुर्विधा भवन्ति, यथा, निषादगान्धारयुक्ताः शुद्धाः, निषादगान्धारयुक्ताः काकलीकलिताः, निषादगान्धारयुक्ताः सान्तराः, निषादगान्धारयुक्ताः काकल्यन्तरोपेताश्चेति। तयोर्निषादगान्धारयोर्मध्ये निषादेन गान्धारेण वा हीनाश्चेत् तदा द्विविधाः; यथा, निषादहीनौ शुद्धौ, निषादहीनौ सान्तरौ, गान्धारहीनौ शुद्धौ, गान्धारहीनौ काकलीकलितौ चेति ।१२१।

षड्जार्चिकेत्यादि ।—ग्रामद्वयस्य चतुर्दशमूर्च्छनासु मध्ये षड्जाद्यौ द्वौ षाड़वौ क्रमौ, तथा मध्यमाद्यौ द्वौ षाड़वौ क्रमौ, इति चत्वारः षाड़वाः क्रमाः, प्रत्येकं द्विधा द्विधा स्युः; यथा, षड्जाद्यौ द्वौ भेदौ निषादहीनत्वात् शुद्धौ सान्तरौ चेति द्विविधौ, एवं मध्यमाद्यौ द्वौ भेदौ गान्धारहीनत्वात्

षड्जाद्यौ मध्यमाद्यौ च चत्वारः स्युर्द्विधा द्विधा ।
चतुर्दशाऽन्ये दशैतेऽष्टाचत्वारिंशदमी क्रमाः ॥ १२२ ॥
सविंशतिः सप्तशती प्रागुक्ता गुणिताः क्रमैः ।
चतुस्त्रिंशत्सहस्राणि षष्ठ्या पञ्चशतानि च ।
इति षाड़वसंख्या स्यादथ पञ्चस्वरान् ब्रुवे ॥ १२३ ॥

---

शुद्धौ काकलीसहितौ चेति द्विविधौ। एवं चतुर्णां प्रत्येकं द्वैविध्यात् (४×२=८) अष्टौ षाड़वाः क्रमा भवन्ति। चतुर्दशसु मध्ये अन्ये च अवशिष्टा दश चतुर्दशा, शुद्धाः सान्तराः काकलीसहिताः काकल्यन्तरोपेताश्चेति चतुर्विधाः। एवं दशानां प्रत्येकं चातुर्विध्यात् (१०×४=४०) चत्वारिंशत्संख्यकाः षाड़वाः क्रमा भवन्ति। प्रथमञ्च अष्टविधा उक्ताः, अतो मिलित्वा (४०+८=४८) अष्टाचत्वारिंशदमी षाड़वाः क्रमा भवन्ति। षाड़वस्य क्रमस्य प्रस्तारे क्रियमाणे प्रतिक्रमं विंशत्युत्तराणि सप्तशतानि भेदा भवन्तीति प्रागेव दर्शितं, अतएव ते (७२०) भेदाः (४८) अष्टाचत्वारिंशता क्रमैः सह गुणिताः सन्तः साकल्येन (७२०×४८=३४५६०) चतुस्त्रिंशत् सहस्राणि षष्ठ्यधिकानि पञ्चशतानि भवन्ति। इति क्रमैः सहिताः षाड़वकूटतानभेदाः ।१२२।१२३।

एवं षाड़वक्रमसंख्यामभिधाय औड़वक्रमसंख्यां निरूपयति, गाद्या-वित्यादि।—ग्रामद्वये चतुर्दश मूर्च्छना यदा अन्यतरस्वरद्वयापकर्षेण औड़वाः क्रियन्ते, तदा गान्धाराद्यौ द्वौ क्रमभेदौ, धैवताद्यौ द्वौ क्रमभेदौ, निषादाद्यौ द्वौ क्रमभेदौ च एवं षट् औड़वाः क्रमाः पूर्ववत् निषादगान्धारयुक्तत्वात् प्रत्येकं चतुर्विधाः सन्तः (६×४=२४) चतुर्विंशतिसंख्यका भवन्ति। अन्ये च अवशिष्टा अष्टौ क्रमभेदा निषादगान्धारयोरेकैकहीनाः सन्तः द्विधा भवन्ति; एवं अष्टौ क्रमभेदाः द्वैविध्यमापन्नाः (८×२=१६) षोड़शसंख्यका जायन्ते। प्रथमञ्च षण्णां क्रमाणां चतुर्विंशतित्वमुक्तम्, अतो मिलिताः पञ्चस्वरक्रमाः (२४+१६=४०) चत्वारिंशत् भवन्ति। औड़वानां प्रस्तारे क्रियमाणे प्रतिमूर्च्छनं १२० भेदाः भवन्तीति प्रागेव कथितम्, अतश्च तेषु (१२०) भेदेषु

गाद्यौ धाद्यौ निषादाद्यौ चतुर्भेदाः षडौड़वाः।
अष्टावन्ये द्विधेत्येवं चत्वारिंशदिमे क्रमाः॥ १२४॥
सविंशतौ शते तैश्च गुणितेऽष्टौ शतानि तु।
चत्वारि च सहस्राणि संख्याः पञ्चस्वरेष्विति॥ १२५॥
चतुःस्वरेषु न्याद्यौ द्वौ चतुर्द्धा द्वादशाऽपरे।
क्रमा द्विधेति द्वात्रिंशच्चतुर्विंशतिताड़िताः।
शतानि सप्ताष्टषष्ट्या स्याच्चतुःस्वरसम्मितिः॥ १२६॥

---

(४०) चत्वारिंशता गुणितेषु (१२० × ४० = ४८००) चत्वारि सहस्राणि अष्टौ शतानि च क्रमैः सह औड़वकूटतानभेदा जायन्ते। इति क्रमसहितानां पञ्चस्वराणां कूटतानानां संख्या ज्ञातव्या। १२४। १२५।

चतुःस्वराणां क्रमाणां संख्यामाह, चतुरित्यादि।—ग्रामद्वयस्थाश्चतुर्दश मूर्च्छनाभेदा अन्त्यस्वरत्रयापकर्षेण यदा चतुःस्वराः क्रियन्ते, तदा निषादाद्यौ द्वौ क्रमभेदौ पूर्ववत् निषादगान्धारयुक्तत्वात् चतुर्द्धा, एवञ्च (४ × २ = ८) अष्टौ क्रमभेदा जायन्ते। अन्ये च द्वादशक्रमा निषादगान्धारयोरेकैक-युक्तत्वात् द्विधा, एवञ्च (१२ × २ = २४) चतुर्विंशतिः क्रमा भवन्ति। प्रथम अष्टौ भेदा उक्ताः, अतो मिलिताः (२४+८ = ३२) द्वात्रिंशत् क्रमभेदाः जायन्ते। चतुःस्वराणां प्रस्तारे तु चतुर्विंशतिभेदा भवन्तीति प्रागेवोक्तम्, अतो द्वात्रिंशत्क्रमभेदेषु चतुर्विंशत्या गुणितेषु (३२ × २४ = ७६८) अष्ट-षष्ट्यधिकानि सप्तशतानि सक्रमचतुःस्वरकूटतानभेदा भवन्ति। १२६।

त्रिस्वरक्रमसंख्यामाह, त्रिस्वरेष्वित्यादि।—ग्रामद्वयस्थितेषु त्रिस्वरेषु चतुर्दशसु क्रमेषु मध्ये मध्यमाद्यौ द्वौ क्रमौ अभेदौ निषादगान्धारहीनत्वाद्-भेदरहितौ। अपरे च द्वादश क्रमभेदाः निषादगान्धारयोरेकैकयुक्तत्वात् द्वैविध्यमापन्नाश्चतुर्विंशतिसंख्यका भवन्ति, एवञ्च पूर्वोक्तक्रमद्वयसहिताः षड्विंशतिसंख्यका जायन्ते। त्रिस्वराणां प्रस्तारे षड्भेदा भवन्तीति

त्रिस्वरेषु तु षाड्वौ द्वावभेदौ द्वादशाऽपरे ।
द्विधा षड्विंशतिरिति क्रमास्ते षड्भिराहताः ।
षट्पञ्चाशच्छतञ्च स्युः ;—द्विस्वरेषु पुनर्द्विधा ॥ १२७ ॥
रि-ग-ध-न्यादयोऽष्टौ स्युः शुद्धाः षडितरे क्रमाः ।
द्वाविंशतिस्ते तु चतुश्चत्वारिंशद्विताडिताः ॥ १२८ ॥
एकस्वरास्त्वभेदत्वान्मौला एव चतुर्दश ॥ १२९ ॥

---

पूर्व्वमुक्तम्, अतश्च षड्भिर्गुणितायां षड्विंशतौ (२६×६=१५६) षट्-पञ्चाशदुत्तरं शतं त्रिस्वरकूटतानाः क्रमसंख्या भवन्ति । १२७ ।

द्विस्वरान् क्रमान् परिगणयति, द्विस्वरेष्वित्यादि ।—ग्रामद्वयस्थेषु द्विस्वरेषु चतुर्दशसु क्रमेषु मध्ये ऋषभाद्यौ द्वौ क्रमभेदौ, गान्धाराद्यौ द्वौ क्रमभेदौ, धैवताद्यौ द्वौ क्रमभेदौ, निषादाद्यौ द्वौ क्रमभेदौ च, एवमष्टौ क्रमभेदाः निषादगान्धारयोरेकैकयुक्तत्वात् द्विधा, अतः षोडशभेदा जायन्ते । अवशिष्टाः षट् क्रमभेदा निषादगान्धारहीनत्वात् शुद्धाः, तेषां साधारणत्वादि-भेदो नास्तीत्यर्थः । एवं षोडश षट् च मिलिता द्वाविंशतिसंख्यकाः द्विस्वराः क्रमभेदा भवन्ति । द्विस्वराणां प्रस्तारे प्रतिक्रमं भेदद्वयमुक्तम्, अतश्च ते द्वाविंशतिभेदा द्वाभ्यां गुणिताः सन्तः (२२×२=४४) चतुश्चत्वा-रिंशत्संख्यका द्विस्वराः कूटतानाः क्रमैः सह भवन्ति । १२८ ।

एकस्वरा इति । एकस्वरास्तु अभेदत्वात् पूर्व्वोक्तभेदाभावात् मौला एव मूर्च्छना एव चतुर्दश, भेदान्तराभावात् तेषां संख्याधिक्यं न भवतीत्यर्थः । अथ सप्तस्वराः क्रमाः पृथक् न दर्शिताः, ते च एवं निरूपणीयाः,—ग्राम-द्वये चतुर्दश मूर्च्छना यदा सप्तस्वरक्रमाः क्रियन्ते तदा ते चतुर्दशभेदाः प्रत्येकं शुद्धादिभेदात् चतुर्विधाः सन्तः (१४×४=५६) षट्पञ्चाशत्संख्यका भवन्ति । प्रतिमूर्च्छनं प्रस्तारे क्रियमाणे हि सप्त क्रमा भवन्ति । अतएव षट्पञ्चाशत्-संख्यायां सप्तभिर्गुणितायां (५६×७=३९२) द्वानवत्यधिकं शतत्रयं पूर्णाः क्रमा भवन्ति । १२९ ।

पूर्व्वोक्तकूटतानेषु ये ये पुनरुक्ताः कूटतानास्तान् सर्वान् निर्दिशति, षड्जादिरित्यादि ।—षड्जादिः शुद्धमध्या हि मध्यमग्रामस्य चतुर्थी मूर्च्छना,

षड्जादेः शुद्धमध्याया भेदकं पञ्चमं विना।
चतुःस्वरे क्रमद्वन्द्वेऽष्टाचत्वारिंशदीरिताः॥ १३० ॥
तानास्त्रिस्वरयोस्ते ते द्वादश द्विस्वरे द्वयम्।
एकं एकस्वरस्ते त्रिषष्टिरौत्तरमन्द्रकैः।
पुनरुक्ता मतास्तानैः ;—न्यादिमार्गीक्रमाः पुनः॥ १३१ ॥

---

अस्याश्चतुःस्वरं यत्क्रमद्वन्द्वं शुद्धसान्तररूपं क्रमद्वयं तस्मिन्, भेदकं पञ्चमं (१) विना अष्टाचत्वारिंशद्भेदाः पुनरुक्ताः। त्रिस्वरयोरेवं शुद्धसान्तरभेदेन द्वयोः क्रमयोः द्वादशतानाः पुनरुक्ताः। द्विस्वरे तु निषादगान्धारहीनतया एकस्मिन् ग्रामे भेदद्वयं पुनरुक्तं। एकस्वरस्तु एक एव तानः पुनरुक्तः। एवं सर्व्वे मिलित्वा (४८+१२+२+१=६३) त्रिषष्टिसंख्यकाः शुद्धमध्यायाः कूटतानाः उत्तरमन्द्रासम्बन्धिभिः कूटतानैः सार्द्धं पुनरुक्ता भवन्ति। १३०। १३१।

एवं शुद्धमध्यायाः पुनरुक्तान् गणयित्वा मार्गीगतान् पुनरुक्तान् संख्याति, न्यादीति।—मार्गी नाम निषादादिका मध्यमग्रामस्य पञ्चमी मूर्च्छना। अस्याः पञ्चस्वरा निषादगान्धारयुक्तत्वात् चत्वारः क्रमा भवन्ति, प्रतिक्रमस्य (१×२×३×४×५=१२०) विंशत्युत्तरं शतं भेदा जायन्ते। अतएव क्रमचतुष्टये (१२०×४=४८०) अशीत्यभ्यधिकशतचतुष्टयं पञ्चस्वरपुनरुक्त-भेदाः। अस्याश्चतुःस्वरा अपि निषादगान्धारयुक्तत्वात् चत्वारः क्रमा भवन्ति, प्रतिक्रमस्य (१×२×३×४=२४) चतुर्विंशतिभेदा जायन्ते। अतः क्रमचतुष्टये (२४×४=९६) षण्णवतिसंख्यकाश्चतुःस्वरपुनरुक्तभेदाः। अस्यास्त्रिस्वरन्तु केवलनिषादयुक्तत्वात् क्रमद्वन्द्वमेव भवति, प्रतिक्रमस्य (१×२×३=६) षट् भेदा जायन्ते। अतः क्रमद्वये (६×२=१२) द्वादश त्रिस्वरपुनरुक्तभेदाः।

---

(१) पञ्चमस्य भेदकत्वं यथा ;——

उत्तरमन्द्राशुद्धमध्ययोर्मूर्च्छनयोरभिन्नेऽपि स्वरूपे पञ्चमएवानयोर्भेदज्ञापको-भवति। तथाहि, उत्तरमन्द्रायां पञ्चमश्चतुःश्रुतिः, शुद्धमध्यायान्तु पञ्चमस्त्रिश्रुतिरित्य-नयोर्भेदः। एवं मार्गीरजन्योः, पौरवीउत्तरायतयोः, हृष्यकाशुद्धषड्जयोश्चापि पूर्व्ववत् चतुःश्रुतित्वेन त्रिश्रुतित्वेन च पञ्चमोभेदकोभवति।

पञ्चस्वरा ये चत्वारस्तत्तानानां चतुःशती ।
अशीत्यभ्यधिका चातुःस्वरे षण्णवतिर्भवेत् ॥ १३२ ॥
द्वादश त्रिस्वरस्तत्र चत्वारो द्विस्वरद्वये ।
एक एकस्वरस्तानस्तेषां पञ्चशती त्वियम् ।
त्रिनवत्या युता तानैरभिन्ना रञ्जनीगतैः ॥ १३३ ॥
धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमात् ।
तत्तानानान्तु साशीतिः शताष्टाविंशतिर्मताः ॥ १३४ ॥

---

अस्या द्विस्वरं केवलनिषादयुक्तत्वात् क्रमद्वयमेव भवति, प्रतिक्रमञ्च (१×२=२) द्वौ भेदौ भवतः। अतः क्रमद्वये (२×२=४) चत्वारो द्विस्वरक्रमभेदाः। एकस्वरस्तु एक एव तानः पुनरुक्तः। एवं सर्व्वे मिलित्वा (४८०+९६+१२+४+१=५९३) त्रिनवत्या युता पञ्चशती मार्ग्याः कूटतानाः रञ्जनीगतैः कूटतानैः सह पुनरुक्ता भवन्ति। अत्र 'भेदकं पञ्चमं विना' इत्यनुवर्त्तते, एवं परत्रापि। १३२। १३३।

पौरव्याः पुनरुक्तान् कूटतानान् गणयति, धैवतादेरिति।—धैवतादिः पौरवी मध्यमग्रामस्य षष्ठी मूर्च्छना। अस्याः षट्स्वरा निषादगान्धारयुक्तत्वात् चत्वारः क्रमा भवन्ति, प्रतिक्रमञ्च (१×२×३×४×५×६=७२०) विंशत्युत्तराणि सप्तशतानि भेदा जायन्ते। अतश्च क्रमचतुष्टयस्य (७२०×४=२८८०) अशीत्युत्तराणि अष्टाविंशतिशतानि पुनरुक्तभेदा भवन्ति। अस्याः पञ्चस्वरा निषादगान्धारयुक्तत्वात् चत्वारः क्रमा भवन्ति, प्रतिक्रमञ्च (१×२×३×४×५=१२०) विंशतिसहितं शतं भेदा जायन्ते। अतएव चतुर्णां क्रमाणां (१२०×४=४८०) अशीत्यधिकशतचतुष्टयं भेदा पुनरुक्ताः। अस्याश्चतुःस्वरौ क्रमौ द्वावेव केवलनिषादयुक्तत्वात्, प्रतिक्रमञ्च (१×२×३×४=२४) चतुर्विंशतिभेदा जायन्ते। एवञ्च (२४×२=४८) अष्टाचत्वारिंशत् चतुःस्वरपुनरुक्तसंख्या जायते। एवं त्रिस्वरावपि केवलनिषादयुक्ततया द्वौ क्रमौ भवतः, प्रतिक्रमञ्च (१×२×३=६) षट् भेदा भवन्ति। अतश्च (६×२=१२) द्वादशसंख्यका त्रिस्वरपुनरुक्तभेदाः। द्विस्वरावपि केवल-

औड़वानाञ्चतुर्थां प्रागुक्ताः संख्याश्चतुःस्वरी ।
त्रिस्वरौ द्विस्वरावेकस्वरः प्रागुक्तसंख्यकाः ॥ १३५ ॥
षड्विंशतिसंयुक्ता चतुस्त्रिंशच्छती त्वियम् ।
तानानां सदृशाकारा स्थानानैरौत्तरायतैः ॥ १३६ ॥
इत्येकाशीतिसंयुक्तं सहस्राणां चतुष्टयम् ।
तानानां पुनरुक्तानां पूर्वापूर्वैः सह क्रमैः ॥ १३७ ॥
अपनीयेत चेदेषां कूटतानमितिर्भवेत् ।
लक्षत्रयं सप्तदश सहस्राणि शतानि च ।
नवत्रिंशद्युतानीति ;—ज्ञानोपायोऽत्र कथ्यते ॥ १३८ ॥

अथ संख्याज्ञानार्थं प्रकारः ।

संख्याज्ञानप्रकारस्तु साम्प्रतं कथयिष्यते ।
अङ्कानेकादिसप्तान्तानूर्द्धमूर्द्धं लिखेत् क्रमात् ॥ १३९ ॥

---

निषादयुक्ततया द्वौ क्रमौ, प्रतिक्रमञ्च (१ × २ = २) द्वौ भेदौ जायेते। अतश्च (२ × २ = ४) चत्वारो त्रिस्वरपुनरुक्तभेदाः। एक एव एकस्वरपुनरुक्तभेदः। एवं पौरच्याः सर्व्वे मिलित्वा (२८८० + ४८० + ४८ + १२ + ४ + १ = ३४२५) पञ्चविंशत्युत्तराणि चतुस्त्रिंशच्छतानि सदृशाकाराः कूटताना उत्तराय...-सम्भिर्भिः कूटतानैः सह पुनरुक्ताः। एवञ्च सर्व्वे पुनरुक्ताः कूटतानाः मिलिताः सन्तः (६३ + ५९३ + ३४२५ ४०८१) एकाशीतिसंयुक्तसहस्र-चतुष्टयसंख्यका भवन्ति। पूर्वापूर्वक्रमसहितपुनरुक्तकूटतानापनयने तु लक्षत्रयं सप्तदशसहस्राणि त्रिंशदुत्तराणि नवशतानि च निष्कृष्टाः कूट-तानाः। १३४। १३५। १३६। १३७। १३८।

अथ संक्षेपेण कूटतानसंख्यापरिज्ञानार्थमुपायमाह, अङ्कानित्यादि। एकादिसप्तान्तान् अङ्कान्, क्रमात् यथाक्रमम् ऊर्द्धम् ऊर्द्धं लिखेत्। तेषु ऊर्द्धोर्द्धक्रमेण लिखितेषु एकादिसप्तान्तेषु अङ्केषु मध्ये, परे परे ऊर्द्धे ऊर्द्धे अङ्के, पूर्व्वेण पूर्व्वेण अधःस्थेन अधःस्थेन अङ्केन, हते गुणिते सति,

| उत्तरमन्द्रायाः— | |
|---|---|
| ,, चतुःस्वर पुनरुक्तसंख्या | ४८ |
| ,, त्रिस्वरपुनरुक्तसंख्या | १२ |
| ,, द्विस्वरपुनरुक्तसंख्या … | २ |
| ,, एकस्वरपुनरुक्तसंख्या… | … |
| मिलिताः | …६२ |

उत्तरमन्द्रायाः कूटतानैः षट् पुनरुक्ताः।

| रजन्याः— | |
|---|---|
| ,, पञ्चस्वरपुनरुक्तसंख्या | ४८० |
| ,, चतुःस्वरपुनरुक्तसंख्या | ८६ |
| ,, त्रिस्वरपुनरुक्तसंख्या … | १२ |
| ,, द्विस्वरपुनरुक्तसंख्या … | ४ |
| ,, एकस्वरपुनरुक्तसंख्या … | १ |
| मिलिताः… | ५८२ |

रजन्याः कूटतानैः सप्त पुनरुक्ताः।

| उत्तरायतायाः— | |
|---|---|
| ,, षट्स्वरपुनरुक्तसंख्या | १८८० |
| ,, पञ्चस्वरपुनरुक्तसंख्या | ४८० |
| ,, चतुःस्वरःपुनरुक्तसंख्या | ४८ |
| ,, त्रिस्वरपुनरुक्तसंख्या | १२ |
| ,, द्विस्वरपुनरुक्तसंख्या … | ४ |
| ,, एकस्वरपुनरुक्तसंख्या… | १ |
| मिलिताः … | २४२५ |
| सर्वे मिलिताः … | ४०८१ |

एवं पुनरुक्ताः कूटतानाः एकाशीत्यधिकं सहस्रचतुष्टयम्।

उत्तरायतायाः कूटतानैः सप्त पुनरुक्ताः।

| पूर्वापूर्वक्रमसंख्या | | क्रमपुनरुक्तकल्पितकूटतानाः |
|---|---|---|
| पूर्णाः | … १६७ | … … १८२२४० |
| षाडवाः | … ४८ | … … … १४५६० |
| औडुवाः | … ४० | … … … ६८०० |
| चतुःस्वराः | … १२ | … … … ७६८ |
| त्रिस्वराः | … २६ | … … … १५६ |
| द्विस्वराः | … २२ | … … … ४४ |
| एकस्वराः | .. ११* | … … … १४ |
| मिलिताः | … ५७१ | मिलिताः … १२२५८२ |

पुनरुक्ताः … … ४०८१

पूर्वापूर्वक्रमाः … … ५७१

पूर्वापूर्वक्रमवर्जितकूटतानाः … ४६५२

क्रमपुनरुक्तवर्जितकूटतानाः … १२२५८२

क्रमपुनरुक्तापनयने १२२५८२—४६५२=११७९३० एकलक्षं सप्तदशसहस्राणि नवशतानि त्रिंशदुत्तराणीति क्रमपुनरुक्तापनयने शिष्टाः कूटतानसंख्याः।

* एकस्वराश्चतुर्दशसंख्यका अपि षड्जमिताद्यैवतानां पुनरुक्ता अन्तर्भावादेवादर्शनान्न परिलिखिताः।

हते पूर्व्वेण पूर्व्वेण तेषु चाऽङ्के परे परे ।
एकस्वरादितानानां संख्या संजायते स्फुटम् ॥ १४० ॥

इति कूटतानप्रकरणम् ।

द्विस्वरं त्रिस्वरं वापि चतुःस्वरमथापि वा ।
क्रमं कश्चिद्विलिख्यादौ पूर्व्वः पूर्व्वः परादधः ॥ १४१ ॥

---

प्रतिपूर्व्वं, एकस्वरादितानानाम् एकस्वरद्विस्वरत्रिस्वरादीनामित्यर्थः, संख्या क्रमात् यथाक्रमं संजायते भवति। तथाहि, प्रथमम् एकाङ्कं (१), तदूर्द्ध्वे द्व्यङ्कं (२), तदूर्द्ध्वे त्र्यङ्कं (३), तदूर्द्ध्वे चतुरङ्कं (४), तदूर्द्ध्वे पञ्चमाङ्कं (५), तदूर्द्ध्वे षष्ठाङ्कं (६), तदूर्द्ध्वे सप्तमाङ्कं (७) स्थापयेत्। ततश्च एकेन द्व्यङ्के हते (१×२=२) द्वौ, द्वाभ्यां त्र्यङ्के हते (२×३=६) षट्, षड्भिश्चतुरङ्के हते (६×४=२४) चतुर्व्विंशतिः, चतुर्व्विंशत्या पञ्चाङ्के हते (२४×५=१२०) विंशत्यधिकं शतम्, विंशत्यधिकेन शतेन षष्ठाङ्के हते (१२०×६=७२०) विंशत्यधिकानि सप्तशतानि, विंशत्यधिकया सप्तशत्या सप्ताङ्के हते (७२०×७=५०४०) चत्वारिंशदुत्तराणि पञ्चसहस्राणि भवन्तीति । १३९ । १४० ।

अथ श्लोकत्रयेण एकस्वरादिसंख्याप्रस्तारं प्रदर्शयति, स यथा,—प्रथमं कश्चित् क्रमं स्थापयित्वा क्रमापेक्षया पूर्व्वः पूर्व्वः स्वरः परात् स्वरात् अधः स्थापनीयः। स पूर्व्वः स्वरः उपरिभागे तिष्ठति चेत्, तदा तस्यापि पूर्व्वं स्थापनीयः, सोऽपि तिष्ठति चेत्, तदा तत्पूर्व्वः स्वरः, एवं क्रमेण षड्ज-पर्य्यन्तं विचारणीयम्। षड्जपर्य्यन्ता अपि पुरतस्तिष्ठन्ति चेत्, तदा द्वितीये स्वरे पूर्व्ववत् प्रस्तारः कर्त्तव्यः, एवमन्येष्वपि स्वरेषु। पूर्व्वोक्तनियमेन पूर्व्वस्मिन् स्वरे स्थापिते उपरिवर्त्तिनः स्वरास्तिष्ठन्ति चेत्, तदा ते पुरतः स्थापनीयाः, अवशिष्टास्तु स्वराः मूलक्रमक्रमेण पृष्ठे स्थापनीया इति। तथाहि, चतुःस्वरे प्रस्तारे कर्त्तव्ये प्रथमं (स, रि, ग, म) इति क्रमं स्थापयित्वा षड्जस्याधःस्थात् पूर्व्वं स्वराभावात् स्वरो न स्थाप्यः, ऋषभस्याधस्तात् तत्पूर्व्वः षड्जः स्थाप्यः, उपरिवर्त्तिनौ गान्धारमध्यमौ पुरः स्थापनीयौ, अवशिष्ट ऋषभः पश्चाद्देयः, एवं (रि, स, ग, म) इति द्वितीयः क्रमभेदः ।

**स्वरः स्थाप्यः ; स चेदग्रे तत्पूर्व्वस्तदधो भवेत् ॥ १४२ ॥**
**पुरतोऽपि लिखेद्धीमान् स्वरानुपरिवर्त्तिनः ।**
**मूलक्रमः क्रमात् षष्ठे शेषाः प्रस्तार ईदृशः ॥ १४३ ॥**

---

एवञ्च चतुःस्वरे प्रस्तारे साकल्येन (१ × २ × ३ × ४ = २४) चतुर्विंशतिर्भेदाः संजायन्ते (१)। १४१। १४२। १४३।

पुनरपि लघुतरेण उपायेन कूटतानानां भेदान् विवक्षुर्नष्टोद्दिष्टपरिज्ञानार्थं खण्डमेरुं कथयति, नष्टेत्यादि।—ऊर्द्ध्वस्थितां प्रथमां पङ्क्तिं सप्तकोष्ठिकां लिखित्वा तदधोऽधः क्रमादेकैककोष्ठेन हीनं पङ्क्तिषट्कं लिखेत्, यथा—प्रथमा पङ्क्तिः सप्तकोष्ठिका, तदधः द्वितीया पङ्क्तिः षट्कोष्ठिका, तदधः तृतीया पङ्क्तिः पञ्चकोष्ठिका, तदधः चतुर्थी पङ्क्तिः चतुःकोष्ठिका,

---

(१) चतुःस्वरप्रस्तारे चतुर्विंशतिक्रमभेदा यथा ;—

| मध्यमान्ताः षट् भेदाः। | | | | | गान्धारान्ताः षट् भेदाः। | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १। | स, | रि, | ग, | म। | ७। | स, | रि, | म, | ग। |
| २। | रि, | स, | ग, | म। | ८। | रि, | स, | म, | ग। |
| ३। | स, | ग, | रि, | म। | ९। | स, | म, | रि, | ग। |
| ४। | ग, | स, | रि, | म। | १०। | म, | स, | रि, | ग। |
| ५। | रि, | ग, | स, | म। | ११। | रि, | म, | स, | ग। |
| ६। | ग, | रि, | स, | म। | १२। | म, | रि, | स, | ग। |
| **ऋषभान्ताः षट् भेदाः।** | | | | | **षड्जान्ताः षट् भेदाः।** | | | | |
| १३। | स, | ग, | म, | रि। | १९। | रि, | ग, | म, | स। |
| १४। | ग, | स, | म, | रि। | २०। | ग, | रि, | म, | स। |
| १५। | स, | म, | ग, | रि। | २१। | रि, | म, | ग, | स। |
| १६। | म, | स, | ग, | रि। | २२। | म, | रि, | ग, | स। |
| १७। | ग, | म, | स, | रि। | २३। | ग, | म, | रि, | स। |
| १८। | म, | ग, | स, | रि। | २४। | म, | ग, | रि, | स। |

एवं पञ्चस्वरप्रस्तारे पञ्चमान्ताश्चतुर्विंशतिः, ततो मध्यमान्ताश्चतुर्विंशतिः, ततो गान्धारान्ताश्चतुर्विंशतिः, तत ऋषभान्ताश्चतुर्विंशतिः, ततः षड्जान्ताश्चतुर्विंशतिः क्रमभेदा भवन्ति। एवं षट्स्वरादिष्वपि प्रस्तारो विज्ञेयः।

अथ खण्डमेरुः ।

नष्टोद्दिष्टप्रबोधार्थं खण्डमेरुरथोच्यते ॥ १४४ ॥
सप्तकोष्ठां लिखेदाद्यां पङ्क्तिमेकैककोष्ठतः ।
हीनान्तु पूर्वपूर्वं स्यात् पङ्क्तिषट्कमधो लिखेत् ।
आद्यपङ्क्त्यादिकोष्ठे तु लिखेदेकं परेषु खम् ॥ १४५ ॥

---

तदधः पञ्चमी पङ्क्तिः त्रिकोष्ठिका, तदधः षष्ठी पङ्क्तिः द्विकोष्ठिका, तदधः सप्तमी पङ्क्तिः एककोष्ठिका चेति। तत्र प्रथमपङ्क्तेः प्रथमकोष्ठे १ एकाङ्कं दद्यात्, प्रथमपङ्क्तेरपरेषु कोष्ठेषु ० शून्यं दद्यात्। द्वितीयपङ्क्तेरपि प्रथमकोष्ठे १ एकाङ्कं दद्यात्; द्वितीयपङ्क्तेरपरेषु द्वितीयादिषु पञ्चसु कोष्ठेषु यथाक्रमं कोष्ठसंख्यया गुणितं पूर्वपूर्वाङ्कं लिखेत् यथा;—पूर्वाङ्कः १, कोष्ठसंख्या २, अतएव १ × २ = २ द्वितीयपङ्क्तेर्द्वितीयकोष्ठाङ्कः, पुनश्च पूर्वाङ्कः २, कोष्ठसंख्या ३, अतएव २ × ३ = ६ द्वितीयपङ्क्तेस्तृतीयकोष्ठाङ्कः। पुनश्च पूर्वाङ्कः ६, कोष्ठसंख्या ४, अतएव ६ × ४ = २४ द्वितीयपङ्क्तेश्चतुर्थकोष्ठाङ्कः। पुनश्च पूर्वाङ्कः २४, कोष्ठसंख्या ५, अतएव २४ × ५ = १२० द्वितीयपङ्क्तेः पञ्चमकोष्ठाङ्कः। पुनश्च पूर्वाङ्कः १२०, कोष्ठसंख्या ६, अतएव १२० × ६ = ७२०

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १मा। पङ्क्तिः | १ | ० | ० | ० | ० | ० | ० |
| २या। पङ्क्तिः | | १ | २ | ६ | २४ | १२० | ७२० |
| ३या। पङ्क्तिः | | | ४ | १२ | ४८ | २४० | १४४० |
| ४र्थी। पङ्क्तिः | | | | १८ | ७२ | ३६० | २१६० |
| ५मी। पङ्क्तिः | | | | | ९६ | ४८० | २८८० |
| ६ष्ठी। पङ्क्तिः | | | | | | ६०० | ३६०० |
| ७मी। पङ्क्तिः | | | | | | | ४३२० |

द्वितीयपङ्क्तावथैकमाद्यकोष्ठे लिखेद्बुधः।
परेषु पूर्व्वपूर्व्वाङ्कं कोष्ठसंख्यागुणं न्यसेत् ॥ १४६ ॥
एवमेव लिखेदङ्कमधोऽधः पङ्क्तिकोष्ठके।
खण्डमेरुरयं प्रोक्तो नष्टोद्दिष्टप्रबोधकः ॥ १४७ ॥
वेद्यतानस्वरमितान् दत्त्वा तेष्वेव लोष्टकान्।
मूलक्रमं लिखित्वादावुद्दिष्टं तदधोलिखेत् ॥ १४८ ॥

---

द्वितीयपङ्क्तेः षष्ठकोष्ठाङ्कः। 'अधोऽधः पङ्क्तिकोष्ठके एवमेवमङ्कं लिखेत्,' अस्यायमर्थः,—द्वितीयपङ्क्तिस्थकोष्ठानामधोऽधः स्थितेषु तृतीयादिपङ्क्तिस्थ-कोष्ठेषु अधोऽधःक्रमेण कोष्ठसंख्यया गुणितं (द्विगुणं, त्रिगुणं, चतुर्गुणम् एवं क्रमेण) द्वितीयपङ्क्तिस्थकोष्ठाङ्कं लिखेत्। तथाहि द्वितीयपङ्क्तेर्द्वितीय-कोष्ठाङ्कः २, अतएव तदधः कोष्ठाङ्कः २×२=४; द्वितीयपङ्क्तेस्तृतीय-कोष्ठाङ्कः ६, अतएव तदधः कोष्ठाङ्कः ६×२=१२, तदधः कोष्ठाङ्कश्च ६×३=१८; द्वितीयपङ्क्तेश्चतुर्थकोष्ठाङ्कः २४, अतएव तदधः कोष्ठाङ्कः २४×२=४८, तदधः कोष्ठाङ्कश्च २४×३=७२, तदधः कोष्ठाङ्कश्च २४×४=९६; द्वितीयपङ्क्तेः पञ्चमकोष्ठाङ्कः १२०, अतएव तदधः कोष्ठाङ्कः १२०×२=२४०, तदधः कोष्ठाङ्कश्च १२०×३=३६०, तदधः कोष्ठाङ्कश्च १२०×४=४८०, तदधः कोष्ठाङ्कश्च १२०×५=६००; द्वितीयपङ्क्तेः षष्ठकोष्ठाङ्कः ७२०, अतएव तदधः कोष्ठाङ्कः ७२०×२=१४४०, तदधः कोष्ठाङ्कश्च ७२०×३=२१६०, तदधः कोष्ठाङ्कश्च ७२०×४=२८८०, तदधः कोष्ठाङ्कश्च ७२०×५=३६००, तदधः कोष्ठाङ्कश्च ७२०×६=४३२०; इति सप्तपङ्क्तिस्थानां सर्व्वेषां कोष्ठानामङ्कविन्यासो ज्ञेयः। अयमेव नष्टोद्दिष्टज्ञानहेतुः खण्डमेरुः कथितः। १४४। १४५। १४६। १४७।

एवं खण्डमेरुमभिधाय उद्दिष्टपरिज्ञानार्थमाह, वेद्यतानेति।—वेद्यो-विशेषो यः तानः त्रिस्वरचतुःस्वरपञ्चस्वरादिः, तत्स्वरपरिमितान् लोष्टकान् कर्कराण्, परेषु कोष्ठकेषु, क्षिपेत् स्थापयेत्। अस्यायमभिप्रायः,—यदि चतुःस्वरो जिज्ञासितः, तदा आदिमारभ्य चतुर्षु कोष्ठकेषु चतुरो लोष्टकान्

स्वरान्मूलक्रमस्थाऽन्त्यात् पूर्व्वं यावतिथः स्वरः ।
उद्दिष्टान्त्यस्तावतिथे कोष्ठेऽधोलोष्टकं क्षिपेत् ॥ १४९ ॥
लोष्टचालनमन्त्यात् स्यात् त्यक्त्वा लब्धं क्रमोभवेत् ।
समञ्चेदन्तिमोऽन्त्येन सोऽपि त्याज्यः प्रयत्नतः ॥ १५० ॥
लोष्टकान्त्याङ्कसंयोगादुद्दिष्टस्य मितिर्भवेत् ।
संख्यया तु यदा रूपे पृष्टे नष्टं तदुच्यते ॥ १५१ ॥
यैरङ्कैर्नष्टसंख्या स्यान्मौलिकाङ्कसमन्वितैः ।
नष्टतानस्वरस्थानं तैर्ज्ञात्वा तं स्वरं लिखेत् ॥ १५२ ॥

---

स्थापयेत्, यदि पञ्चस्वरो जिज्ञासितः, तदा पञ्च कोष्ठकान् स्थापयेत्, एवं षट्-स्वरादिष्वपि । १४८ ।

लोष्टचालनमाह, स्वरादिति ।—मूलक्रमस्थान्त्यात् स्वरात् उद्दिष्टस्य अन्त्यः स्वरः, यावतिथः पूर्व्वं गणने सति यावत्संख्यापूरक इत्यर्थः, तावतिथे तावत्संख्यापूरणे अधःकोष्ठके, लोष्टकं कर्करं, क्षिपेत् स्थापयेत् । इदं लोष्टचालनं, अन्त्यात् अन्त्यस्वरमारभ्येत्यर्थः, स्यात् । एवं लोष्टचालने कृते, लब्धं लब्धमितं स्वरं त्यक्त्वा लब्धसंख्यकेन स्वरेण हीन इत्यर्थः, क्रमो भवेत् । एवं कृते, लोष्टकान्त्याङ्कसंयोगात् लोष्टानामन्त्यानां सर्व्वेषामङ्कानां मेलनेन, उद्दिष्टस्य मितिः संख्या भवेत् । तत्र त्रिस्वरकूटतानजिज्ञासायां त्रिकोष्ठः खण्डमेरुः, चतुःस्वरकूटतानजिज्ञासायां चतुःकोष्ठः, एवं पञ्च-स्वरादौ पञ्चकोष्ठादिः खण्डमेरुः कर्त्तव्यः । तत्र च स्वरपरिमिता एव कोष्ठाः प्रदातव्याः । १४९ । १५० । १५१ ।

नष्टज्ञानप्रक्रियां संक्षेपेण प्रदर्शयन्नाह, यैरिति ।—मौलिकाङ्कसमन्वितैः आद्यपङ्क्तिस्थितमौलाङ्कसहितैः, यैः अङ्कैः, नष्टसंख्या स्यात्, तैरेव अङ्कैः नष्टतानस्वराणां स्थानं ज्ञात्वा, तं स्वरं लिखेत् । यावत्संख्यकानि कोष्ठ-स्थानानि स्वरस्थानान्यपि तावत्संख्यकान्येव, अतश्च प्रतिपङ्क्ति एकैककोष्ठे लोष्टस्थापनेन आद्यपङ्क्तिस्थैकाङ्कमिश्रणेन च नष्टसंख्या पूरणीया । अनन्तरं

क्रमोऽत्रापि च कर्त्तव्योलब्धत्यागेन पूर्ववत् ।
तथैवाऽत्र लिखेदुद्दिष्टमेवं नष्टोत्तरं वदेत् ॥ १५३ ॥
तानस्वरमितोर्द्ध्वाधः पङ्क्तिगान्त्याङ्कमिश्रणात् ।
एकस्वरादितानानां संख्या संजायते स्फुटम् ॥ १५४ ॥

इति नष्टोद्दिष्टप्रकरणम् ।

अथ साधारणप्रकरणम् ।

साधारणं भवेद्द्वेधा स्वरजातिविशेषणात् ॥ १५५ ॥

---

शून्यस्थानादधोगणने यावतिथे कोष्ठे लोष्टस्तिष्ठति क्रमस्य अन्तिमस्वरात् तावत्संख्यकः स्वरो ज्ञातव्य इति भावः । अत्रापि पूर्ववत्, लब्धत्यागेन लब्धस्य स्वरस्य लोपेन, क्रमः कर्त्तव्यः । तानस्वरे मिताः संख्याताः, याः ऊर्द्ध्वाधःपङ्क्तयः, तद्गाः तासु पङ्क्तिषु स्थिताः, ये अन्त्याङ्काः, तेषां मिश्रणात् सम्मेलनेन, एकस्वरादितानानां संख्या, क्रमात् यथाक्रमं, संजायते भवति । तथाहि, पङ्क्तिद्वयस्य अन्त्याङ्कमिश्रणेन द्विस्वरसंख्या १+१ =२ द्वौ पङ्क्तित्रयस्य अन्त्याङ्कमिश्रणेन त्रिस्वरसंख्या १+१+४=६ षट्, पङ्क्तिचतुष्टयस्य अन्त्याङ्कमिश्रणेन चतुःस्वरसंख्या १+१+४+१८=२४ चतुर्विंशतिः, पङ्क्तिपञ्चकस्य अन्त्याङ्कमिश्रणेन पञ्चस्वरसंख्या १+१+४+१८+९६=१२० विंशत्युत्तरं शतम्, पङ्क्तिषट्कस्य अन्त्याङ्कमिश्रणेन षट्स्वरसंख्या १+१+४+१८+९६+६००=७२० विंशत्युत्तराणि सप्तशतानि, सर्व्वासां पङ्क्तीनाम् अन्त्याङ्कमिश्रणेन सप्तस्वरसंख्या १+१+४+१८+९६+६००+४३२०=५०४० चत्वारिंशदुत्तराणि पञ्चसहस्राणि । विस्तरस्तु सङ्गीतसुधाकररत्नाकरादिग्रन्थेषु द्रष्टव्यः । १५२ । १५३ । १५४ ।

पूर्व्वं साधारणमुक्तम्, अधुना तल्लक्षणं तद्भेदांश्च निरूपयति, साधारणमिति । स्वर-जातिविशेषणात् स्वरविशेषणात् जातिविशेषणाच्च, साधारणं द्वेधा द्विविधं भवेत् । तत्र स्वरसाधारण-जातिसाधारणयोर्मध्ये, स्वर-साधारणं चतुर्द्धा चतुर्विधं परिकीर्त्तितम् । १५५ ।

स्वरसाधारणं तत्र चतुर्द्धा परिकीर्त्तितम्।
काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात्॥ १५६॥
साधारणं काकली च्चि भवेत् षड्जनिषादयोः।
अन्तरस्याऽपि गमयोरेवं साधारणं मतम्॥ १५७॥
निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत्।
ऋषभस्त्वन्तिमां प्रोक्तं षड्जसाधारणं तदा॥ १५८॥
मध्यमस्याऽपि गपयोरेवं साधारणं मतम्।
रागालापनसंयुक्तं जातिसाधारणं विदुः॥ १५९॥

इति साधारणप्रकरणम्।

---

स्वरसाधारणस्य भेदचतुष्टयमाह, काकल्येति।—काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात् स्वरसाधारणं चतुर्द्धेति शेषः। काकलीसाधारणम् अन्तरसाधारणं षड्जसाधारणं मध्यमसाधारणञ्चेति स्वरसाधारणं चतुर्विधमित्यर्थः। १५६।

तत्र काकल्याः साधारणत्वमाह, साधारणमिति।—काकली च्चि षड्जनिषादयोः स्वरयोः साधारणं भवेत्। तथाहि, काकलीस्वरः निषादस्य श्रुतिद्वयं षड्जस्य च श्रुतिद्वयं गृहीत्वा निषादषड्जयोः समानावस्थो भवतीति काकल्या निषादषड्जयोः साधारण्यमिति। अन्तरस्य साधारणत्वमाह, अन्तरस्येति। अन्तरस्यापि ग-मयोः गान्धारमध्यमयोः एवं पूर्व्वोक्तप्रकारं साधारणं मतम्। तथाहि, अन्तरस्वरः गान्धारस्य श्रुतिद्वयं मध्यमस्य च श्रुतिद्वयं प्राप्तः गान्धारमध्यमयोस्तुल्यावस्थो भवतीति तस्य उभयोः साधारणत्वमिति। १५७।

षड्जसाधारणमाह, निषाद इति।—निषादो यदि षड्जस्य आद्यां प्रथमां श्रुतिं तीव्रामित्यर्थः, समाश्रयेत् गृह्णीयात्, ऋषभस्तु षड्जस्य अन्तिमां चतुर्थीं श्रुतिं छन्दोवतीमित्यर्थः, समाश्रयेदिति शेषः, तदा षड्जसाधारणं प्रोक्तम्। १५८।

अथ स्थाय्यादिवर्णाः।

गानक्रियोच्यते वर्णः स चतुर्द्धा निरूपितः।
स्थाय्यारोह्यवरोही च सञ्चारीत्यथ लक्षणम्॥ १६०॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्य स्वरस्य यः।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ।
एतत्सम्मिश्रणाद्वर्णः सञ्चारी परिकीर्त्तितः॥ १६१॥

---

मध्यमसाधारणमाह, मध्यमस्येति।—मध्यमस्यापि ग-पयोः गान्धारपञ्चमयोः, एवं पूर्व्ववत् साधारणं मतम्। गान्धारो हि यदा मध्यमस्य आद्यां श्रुतिं वज्रिकानाम्नीं गृह्णाति, पञ्चमश्च मध्यमस्य अन्तिमां श्रुतिं मार्जनीं, गृह्णाति, तदा गान्धारपञ्चमयोरुभयोरेव मध्यमस्यैकैकश्रुतिग्रहणान्मध्यमस्य तदुभयसाधारणत्वमित्यर्थः। जातिसाधारणमाह, रागेति। रागालापनसंपन्नां जातिसाधारणं विदुः पण्डिता इति शेषः। रागाएव शुद्धकैशिकमध्यमादयो जातिसाधारणमिति केचित्, समानग्रामोद्भवासु एकांशस्वरासु जातिषु यत् समानं गानं तत् जातिसाधारणमित्यन्ये। १५९।

वर्णलक्षणं तद्भेदांश्च निरूपयन्नाह, गानेति।—गानक्रिया स्वराणामिति शेषः, वर्ण उच्यते। स्वराणां यथाविधि गानकरणमेव वर्ण इत्यर्थः। स वर्णः चतुर्द्धा चतुर्विधः, निरूपितः निर्णीतः पण्डितैरिति शेषः। किं तत् चतुर्विधत्वमित्याह, स्थायीति। स्थायी, आरोही, अवरोही, सञ्चारी चेति वर्णश्चतुर्विधः। १६०।

तत्र स्थायिवर्णं लक्षयति, स्थित्वेति। एकस्यैव स्वरस्य षड्जादेः यः स्थित्वा स्थित्वा स्थायं स्थायं विलम्ब्य विलम्ब्येत्यर्थः, प्रयोगः उच्चारणं, स स्थायी वर्णो विज्ञेयः। षड्जस्य स्थायी वर्णो यथा,—स स स स, इति; मध्यमस्य यथा,—म म म म, इति एवमन्येषामपि। परौ आरोह्यवरोहिणौ वर्णौ, अर्थमभिधेयम् अनुगतम् अन्वर्थं सार्थकमित्यर्थः, नाम आख्या ययोस्तावन्वर्थनामकौ यथानामानुरूपमेव तयोर्लक्षणमित्यर्थः। स्वराणामारोहो यत्र सः आरोही, स्वराणामवरोहो यत्र सः अवरोही वर्ण इति भावः। एतत्-

अथवा,—

यत्रोपविश्यते रागः स्वरः स्थायी स कथ्यते ॥ १६२ ॥

[ इति स्थाय्यादिवर्णलक्षणम् ।

अथ ग्रहादिः ।

गीतादौ स्थापितो यस्तु स ग्रहस्वर उच्यते ।
न्यासस्वरस्तु विज्ञेयो यस्तु गीतसमापकः ।
बहुलत्वं प्रयोगेषु स चांशस्वर उच्यते ॥ १६३ ॥

अथालङ्कारलक्षणम् ।

विशिष्टं वर्णसन्दर्भमलङ्कारं प्रचक्षते ।
एकैकस्यां मूर्च्छनायां त्रिषष्टिर्वदिता बुधैः ॥ १६४ ॥

[ इत्यलङ्कारलक्षणम् ।

---

सम्मिश्रणात् एतेषां स्थाय्यारोह्यवरोहिवर्णानां परस्परसम्मिश्रणादित्यर्थः, सञ्चारी वर्णः परिकीर्त्तितः। १६१।

मतान्तरे स्थायिलक्षणमाह, यत्रेति।—यत्र स्वरे रागः उपविश्यते स्वयमेव स्थित्वा विश्राम्यति स स्थायी स्वरः कथ्यते। यदुक्तं,—रागोपवेशनं यत्र स स्थायी स्वर उच्यते। इति। १६२।

ग्रहन्यासांशानां स्वराणां लक्षणान्याह, गीतादाविति।—यस्तु स्वरः गीतादौ गीतस्य आरम्भे स्थापितः प्रयुक्तः, स ग्रहस्वर उच्यते। यस्तु स्वरः गीतसमापकः गीतस्य आन्यादेरन्ते तिष्ठतीत्यर्थः, स न्यासस्वरो विज्ञेयः। प्रयोगेषु जातिरागादिव्यवहारेषु बहुलत्वं बाहुल्यं, सः प्रयोगबाहुल्यरूप-इत्यर्थः, अंशस्वर उच्यते, प्रयोगबाहुल्यमेव प्रधानमंशस्वरलक्षणमिति भावः। १६३।

अलङ्कारसामान्यलक्षणमाह, विशिष्टमिति।—विशिष्टं वैचित्र्यसम्पन्नं वर्णसन्दर्भं स्थाय्यादिवर्णसमुदयम् अलङ्कारं प्रचक्षते कथयन्ति, पण्डिताः इति शेषः। वर्णवैचित्र्यमलङ्कार इति संक्षेपः। यथाहि कटककुण्डला-दयो नरशरीरेषु शोभाविशेषमुत्पादयन्तोऽलङ्कारा इत्युच्यन्ते, तथा स्थाय्यारोह्यवरोहिसञ्चारिवर्णरूपसङ्गीतशरीरेषु वैचित्र्यविशेषमुत्पादयन्तः

अथालङ्कारप्रकारः ।

सरि सरि ग, रिग रिग म, गम गम प, मप मप ध, पध पध नि, धनि धनि स । इति प्रथमः ।

सस रिरि गग मम पप धध निनि सस । इति द्वितीयः ।

अथ जातिलक्षणानि ।

ग्रहांशतारमन्द्राश्च न्यासापन्यासकौ तथा ।
अपि संन्यासविन्यासौ बहुत्वं चाल्पता ततः ॥ १९५ ॥
एतान्यन्तरमार्गेण सह लक्ष्माणि जातिषु ।
षाडवौडविते चापीत्येवमाहुस्त्रयोदश ॥ १९६ ॥

---

प्रसन्नाद्यादयोऽलङ्कारा इत्युच्यन्ते । एकैकस्यां मूर्च्छनायां त्रिषष्टिरलङ्काराः बुधैः पण्डितैर्वदिताः कथिताः * । १९४ ।

त्रयोदश जातिलक्षणान्याह, ग्रहांशेति ।—जातिषु त्रयोदश लक्ष्माणि लक्षणानि आहुः, तानि यथा ;—(१) ग्रहः, (२) अंशः, (३) तारः, (४) मन्द्रः, (५) न्यासः, (६) अपन्यासः, (७) संन्यासः, (८) विन्यासः, (९) बहुत्वं, (१०) अल्पता, (११) अन्तरमार्गः, (१२) षाडवं, (१३) औडवितञ्चेति । १९५ । १९६ ।

---

* (६३) त्रिषष्टिरलङ्कारा अकारादिक्रमेण यथा ;—

१ । अभ्युच्चयः (शा)
२ । अभ्युच्चयः (सं)
३ । अवलोकितः (सं)
४ । आक्षिप्तः (शा)
५ । आक्षिप्तः (सं)
६ । आचयः (सं)
७ । उद्गीतः (शा)
८ । उद्गीतः (सं)
९ । उद्घाटितः (सं)
१० । उद्वाहितः (शा)
११ । उद्वाहितः (सं)
१२ । उद्घट्टितः (सं)
१३ । ऊर्मिः (सं)
१४ । क्रमः (सं)
१५ । क्रमरेचितः (शा)
१६ । त्रिवर्णः (शा)
१७ । त्रिवर्णः (सं)
१८ । निष्कर्षः (शा)
१९ । निष्कर्षः (सं)
२० । निष्कूजितः (सं)
२१ । परिवर्तः (सं)
२२ । प्रसन्नमध्यः (शा)

अथ स्वरा उच्यन्ते ।

श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः ।
पञ्चमो धैवतश्चापि निषाद इति सप्त ते ॥ १६७ ॥

---

श्रुतिभ्यः पूर्व्वोक्ताभ्यः, स्वराः स्युर्भवेयुः जायन्त इत्यर्थः, श्रुतिभ्य इति पञ्चम्या जनिकर्त्तुः प्रकृतिरित्यनेन श्रुतीनां स्वरं प्रति कारणत्वं प्रतीयते । ते च स्वराः षड्जः, ऋषभः, गान्धारः, मध्यमः, पञ्चमः, धैवतः, निषादश्च

---

२३ । प्रसन्नादिः (स्था)
२४ । प्रसन्नाद्यन्तः (स्था)
२५ । प्रसन्नान्तः (स्था)
२६ । प्रसादः (स्था)
२७ । प्रसादः (सं)
२८ । प्रस्तारः (स्था)
२९ । प्रस्तारः (सं)
३० । प्रेङ्खः (सं)
३१ । प्रेङ्खितः (आ)
३२ । प्रेङ्खितः (अं)
३३ । मन्द्रमध्यः (सं)
३४ । मन्द्रादिः (सं)
३५ । मन्द्रान्तः (सं)
३६ । रञ्जितः (सं)
३७ । ललितस्वरः (सं)
३८ । बिन्दुः (आ)
३९ । बिन्दुः (अं)
४० । बिन्दुः (अं)
४१ । विस्तीर्णः (आ)
४२ । विस्तीर्णः (अं)
४३ । वेणिः (आ)
४४ । वेणिः (अं)
४५ । वेणुः (सं)
४६ । व्याहृतः (सं)
४७ । स्तोमः (सं)
४८ । सन्धिप्रच्छादनः (आ)
४९ । सन्धिप्रच्छादनः (अं)
५० । सन्निवृत्तप्रवृत्तः (सं)
५१ । समः (सं)
५२ । सललितः (सं)
५३ । हसितः (आ)
५४ । हसितः (अं)
५५ । हुङ्कारः (सं)
५६ । ह्रादमानः (सं)

अन्ये च सप्त प्रसिद्धा अलङ्काराः ।

५७ । आवर्त्तकः (१)
५८ । उपलोलः (२)
५९ । उल्लसितः (३)
६० । तारमन्द्रप्रसन्नः (४)
६१ । मन्द्रतारप्रसन्नः (५)
६२ । विधूतः (६)
६३ । अवदानः (७)

(स्था) चिह्निता अलङ्काराः स्थायिवर्णगताः ।
(आ) चिह्निता अलङ्कारा आरोहिवर्णगताः ।
(अं) चिह्निता अलङ्कारा अवरोहिवर्णगताः ।
(सं) चिह्निता अलङ्काराः सञ्चारिवर्णगताः ।
आरोहिणि ये द्वादश अलङ्कारास्तत्र अवरोहक्रमात् अवरोहिणि ज्ञेयाः ।—

तेषां संज्ञाः स रि ग म प ध नीत्यपरा मताः॥ १६८॥
मयूरचातकच्छागः क्रौञ्चकोकिलदर्दुराः।
गजश्च सप्त षड्जादीन् स्वरानुच्चारयन्त्यमी॥ १६९॥
षड्जं वदति मयूरः पुनः स्वरमृषभं चातको ब्रूते।
गान्धाराख्यं छागो निगदति च मध्यमं क्रौञ्चः॥ १७०॥

---

इति सप्त। तेषां स्वराणां अपराः संज्ञाः व्यवहारार्थं संक्षिप्तनामान्तराणीत्यर्थः, यथाक्रमं स, रि, ग, म, प, ध, नि, इति। तथाहि, स इति षड्जवाचकः, रि इति ऋषभवाचकः, ग इति गान्धारवाचकः, म इति मध्यमवाचकः, प इति पञ्चमवाचकः, ध इति धैवतवाचकः, नि इति निषादवाचकः।१६७।१६८।

अथ स्वराणामसाधारणानुकारयितृभेदानाह मयूरइति।—मयूरः, चातकः पक्षिविशेषः, छागः, क्रौञ्चो वकविशेषः, कोकिलः, दर्दुरोभेकः, गजश्च अमी सप्त यथाक्रमं षड्जादीन् स्वरान् उच्चारयन्ति। तथाहि, मयूरः षड्जं वदति, चातकः ऋषभं स्वरं ब्रूते, छागो गान्धाराख्यं स्वरं वदति, क्रौञ्चो—मध्यमं निगदति। कलिता शोभना वाक् स्वरो यस्य असौ कलकण्ठ इत्यर्थः, पिकः कोकिलः, पञ्चमं स्वरं गदति, तथा उद्भूतो मदो यस्यासौ भेदः नववर्षासलिलसेकपुलकित इत्यर्थः, दर्दुरो भेको धैवतं स्वरं रटति वदति, तथा शृणिसमाहतं अङ्कुशताडितं मस्तकं यस्य सः तादृशः कुञ्जरो हस्ती, नासिकया नासारन्ध्रेण, अन्तिमं स्वरं निषादं, गदति, मूर्द्धि अङ्कुशाघातकाले करी निषादस्वरमुदीरयतीत्यर्थः। नारदमते यथा;—षड्जं रौति मयूरो हि गावोनर्दन्ति चर्षभम्। अजा विरौति गान्धारं क्रौञ्चोनदति मध्यमम्॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः॥ स्वराणां निर्वाक्तिर्यथा सङ्गीतसमयसारे;—नासा कण्ठमुरस्तालुजिह्वा दन्तास्तथैव च। षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृतः॥ नाभेः समुद्गितोवायुः कण्ठशीर्षसमाहतः। ऋषभस्येव नादं यत् तस्मादृषभईरितः। नाभेः समुद्गितोवायुः कण्ठशीर्षसमाहतः। गन्धर्वसुखहेतुः

गदति पञ्चममञ्चितवाक् पिको रटति धैवतमुन्मददर्दुरः।
श्रुतिसमाहतमस्तककुञ्जरो गदति नासिकया स्वरमन्तिमम्॥७१॥

[ इति स्वरप्रकरणम्।

इति श्रीचतुरदामोदरविरचिते सङ्गीतदर्पणे
प्रथमः स्वराध्यायः।

---

स्थानात् गान्धारस्तेन कथ्यते। वायुः समुत्थितो नाभेर्हृदये च समाहतः। मध्यस्थानोद्भवत्वाच्च मध्यमस्तेन कीर्तितः। वायुः समुत्थितो नाभेरोष्ठकण्ठशिरोहृदः। पञ्चस्थानसमुद्भूतः पञ्चमस्तेन सम्मतः॥ नाभेः समुत्थितो वायुः कण्ठतालुशिरोहृदि। तत्तत्स्थाने धृतो यस्मात्ततोऽसौ धैवतो मतः॥ नाभेः समुत्थितो वायुः कण्ठतालुशिरोहतः। निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते॥ इति। स्वराणामुत्पत्तिर्यथा रत्नावल्याम्:—ऋग्वेदात् षड्जऋषभौ यजुषोमध्यधैवतौ। सामवेदात्समुद्भूतौ तथा गान्धारपञ्चमौ। अथर्वणोनिषादश्च स्वरजन्म समीरितम्। इति।

# रागाध्यायः।

अथ रागविवेको लिख्यते।

योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः।
रञ्जको जनचित्तानां स रागः कथितो बुधैः॥ १ ॥

अथ रागाङ्गम्।

रागच्छायानुकारित्वाद्रागाङ्गमिति कथ्यते।

[ इति रागाङ्गम्।

अथ भाषाङ्गम्।

भाषाच्छायाश्रिता येन भाषाङ्गं तेन हेतुना॥ २ ॥

[इति भाषाङ्गम्

अथ क्रियाङ्गम्।

करुणोत्साहकत्वं युक्तं क्रियाङ्गं तेन हेतुना।

[ इति क्रियाङ्गम्।

अथोपाङ्गम्।

किञ्चिच्छायानुकारित्वादुपाङ्गमिति कथ्यते॥ ३ ॥

[ इत्युपाङ्गम्।

अथ काण्डारणा।

काण्डारणा तु कथिता तारस्थानेषु धीमता।
गमकैर्विविधैर्युक्ता कौशलेन विभूषिता॥ ४ ॥

[ इति काण्डारणा।

---

स्वराः षड्जादिरूपाः, वर्णाः स्थाय्यादिरूपाः, तैर्विभूषितोऽलङ्कृतः। जनचित्तानां रञ्जकः सकललोकमनःसु परमानन्दसन्दोहप्रदः। रञ्जनादेवास्य रागव्यपदेशभागित्वं, तथा चोक्तम्,—यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम्। ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः। अपरञ्च यथा,—यस्य श्रवणमात्रेण रज्यन्ते सकलाः प्रजाः। सर्वानुरञ्जनाद्धेतोस्तेन राग इति स्मृतः॥ इति। रञ्ज्धातोर्घञ्प्रत्ययेन निष्पन्नोऽयं रागशब्दः।१।

अथ प्रकारान्तरे रागाणां त्रैविध्यं दर्शयति।

शुद्धाश्छायालगाः प्रोक्ताः सङ्कीर्णाश्च तथैव च ॥ ५ ॥

तत्र शुद्धरागत्वं नाम शास्त्रोक्तनियमानुपालकत्वं भवति। छायालगत्वं नामान्यच्छायालगत्वेन रक्तिहेतुत्वं भवति। सङ्कीर्णरागत्वं नाम शुद्धच्छायालगद्वयत्वेन रक्तिहेतुत्वं भवति। इति कल्लिनाथोक्तं लिखितम्।*

औडुवः पञ्चभिः प्रोक्तः स्वरैः षड्भिश्च षाडवः।
सम्पूर्णः सप्तभिर्ज्ञेय एवं रागस्त्रिधा मतः ॥ ६ ॥

अथ रागाः।

श्रीरागनट्टौ बङ्गालो भासमध्यमषाडवौ।
रक्तहंसश्च कोल्हासः प्रसवो भैरवो ध्वनिः ॥ ७ ॥
मेघरागः सोमरागकामोदौ चाम्रपञ्चमः।
स्यातां कन्दर्पदेशाख्यौ ककुभान्तश्च कैशिकः।
नट्टनारायणश्चेति रागा विंशतिरीरिताः ॥ ८ ॥

---

गमकैः स्वरस्य कम्पभेदैः। स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः। भेदाः पञ्चदशैवास्य कथितास्तिरिपादयः॥ इति गमकलक्षणं तद्भेदांश्च तत्प्रकरणे वक्ष्ये। ४।

* नेपालदेशीयपुस्तके तु शुद्धरागत्वं नाम शुद्धच्छायालगमुख्यत्वेन रक्तिहेतुत्वम्। सङ्कीर्णरागत्वं नाम शास्त्रोक्तनियमार्गरक्तिहेतुत्वम्। इति पाठान्तरं दृश्यते। कल्लिनाथस्तु सङ्गीतरत्नाकरस्य टीकाकृतामन्यतम-स्तस्यैव लिखितमत्र समुद्धृतम्। स्वमते तु सम्पूर्णषाडवौडवभेदात् रागस्य त्रैविध्यमनन्तरोक्तश्लोकेनाख्यातवान्।

औडवशब्दस्य व्युत्पत्तिर्यथा;—उडवः नक्षत्राणि यान्ति गच्छन्ति यस्मिन्, इति उडवं व्योम तच्च भूतेषु पञ्चमम्, तेन पञ्च संख्याः प्रतीयन्ते। औडवी संख्या पञ्च स्वरसंख्या इत्यर्थः, विद्यते यत्र। इति। ६।

रक्तहंसः कोलहासः, इति पाठान्तरम्। ७।

अथ रागाणामुद्भवं दर्शयति ।

शिवशक्तिसमायोगाद्रागाणां सम्भवो भवेत् ।
पञ्चास्यात् पञ्च रागाः स्युः षष्ठस्तु गिरिजामुखात् ॥ ९ ॥
सद्योवक्त्रात्तु श्रीरागो वामदेवाद् वसन्तकः ।
अघोराद् भैरवोऽभूत् तत्पुरुषात् पञ्चमोऽभवत् ॥ १० ॥
ईशानाख्यान्मेघरागो नाट्यारम्भे शिवादभूत् ।
गिरिजाया मुखाल्लास्ये नट्टनारायणोऽभवत् ॥ ११ ॥

पार्वत्युवाच ।

के रागाः काश्च रागिण्यः का वेला ऋतवश्च के ।
किं रूपं कथमुच्चारो वद देव प्रसादतः ॥ १२ ॥

ईश्वर उवाच ।

श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा ।
मेघरागो बृहन्नाटः षडेते पुरुषाह्वयाः ॥ १३ ॥

[ इति षट् पुरुषरागाः ।

अथ रागिण्यः ।

मालश्री त्रिवणी गौरी केदारी मधुमाधवी ।
ततः पाहाड़िका ज्ञेया श्रीरागस्य वराङ्गनाः ॥ १४ ॥

---

शिवो महादेवः, शक्तिः पार्वती, तयोः समायोगात् । अथ शिवशक्त्योः समयोगादिति क्वचित्पाठः । ९ ।

सद्योवक्त्रः, वामदेवः, अघोरः, तत्पुरुषः, ईशानश्चेति शिवस्य पञ्च मूर्त्ति-भेदाः । लास्ये नारीनृत्ये, यदुक्तं नारदसंहितायाम्,—पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते । इति । १० । ११ ।

वेला गानसमयः । ऋतवो रागविशेषोपयोगिग्रीष्मवर्षादिकालाः । रूपं मूर्त्तिः । उच्चारो निर्म्माणप्रकारः स्वरवर्णाद्यवयवसंस्थानमिति यावत् । प्रसादतः कृपया । देव इति महादेवसम्बोधनम् । १२ ।

देशी देवगिरी चैव वराटी तोडिका तथा।
ललिता चाऽथ हिन्दोली वसन्तस्य वराङ्गनाः॥ १५॥
भैरवी गुर्ज्जरी रामकिरी गुणकिरी तथा।
बाङ्गाली सैन्धवी चैव भैरवस्य वराङ्गनाः॥ १६॥
विभाषा चाऽथ भूपाली कर्णाटी वड़हंसिका।
मालवी पटमञ्जर्य्या सहैताः पञ्चमाङ्गनाः॥ १७॥
मल्लारी सौरटी चैव सावेरी कौशिकी तथा।
गान्धारी हरश्रृङ्गारा मेघरागस्य योषितः॥ १८॥
कामोदी चैव कल्याणी आभिरी नाटिका तथा।
सारङ्गी नट्टहम्बीरा नट्टनारायणाङ्गनाः॥ १९॥

[इति षट्त्रिंशद्रागिण्यः।

अथ रागवेला।

मधुमाधवी च देशाख्या भूपाली भैरवी तथा।
वेलावली च मल्लारी वल्लारी सोमगुर्ज्जरी॥ २०॥
धनाश्रीर्मालवश्रीश्च मेघरागश्च पञ्चमः।
देशकारी भैरवश्च ललिता च वसन्तकः।
एते रागाः प्रगीयन्ते प्रातरारभ्य नित्यशः॥ २१॥

---

वराटीत्यत्र वैराटी, तोड़िकेत्यत्र टोड़िका, इति पाठान्तरम्॥ १५॥

भैरवी गुर्ज्जरी चैव रेवा गुणकिरी तथा, इत्यपि क्वचित् पाठः। विभाषेत्यत्र विभासः, वड़हंसिकेत्यत्र पटहंसिका, मालवीत्यत्र मालश्रीः मालवश्रीश्चेति पाठान्तराणि दृश्यन्ते। पञ्चमाङ्गनाः पञ्चमरागस्य भार्य्याः। १६। १७।

वल्लारीत्यत्र वल्लाली इति क्वचित् पाठः। २०।

प्रातरारभ्य प्रहरं यावदित्यर्थः। २१।

सुर्व्वरी कौशिकश्चैव सावेरी पटमञ्जरी।
रेवा गुणकिरी चैव भैरवी रामकिर्य्यपि।
सौराटी च तथा गेया प्रथमप्रहरोत्तरम् ॥ २२ ॥
वैराटी तोड़िका चैव कामोदी च कुड़ायिका।
गान्धारी नागशब्दी च तथा देशी विशेषतः।
शङ्कराभरणो गेयो द्वितीयप्रहरात् परम् ॥ २३ ॥
श्रीरागो मालवाख्यश्च गौरी त्रिवणसंज्ञिका।
नट्टकल्याणसंज्ञश्च सारङ्गनट्टकौ तथा ॥ २४ ॥
सर्व्वे नाटाश्च केदारी कर्णाट्याभीरिका तथा।
वड़हंसी पहाड़ी च तृतीयप्रहरात् परम्।
अर्द्धरात्रावधि ज्ञेया एते रागाः सुखप्रदाः ॥ २५ ॥
यथोक्तकाल एवैते गेयाः पूर्व्वविधानतः।
राजाज्ञया सदा गेया न तु कालं विचारयेत् ॥ २६ ॥
[ इति रागवेला।

---

गुणकिरी, रामकिरी, सौराटी, इत्यत्र यथाक्रमं गुणकरी, रामकरी सौरटी, इति पाठान्तराणि दृश्यन्ते। प्रथमप्रहरोत्तरं द्वितीयप्रहरावधी-त्यर्थः। २२।

गौरीत्यत्र गोड़ीति क्वचित् पुस्तके पाठः। २४।

वड़हंसीत्यत्र पटहंसी इति पाठान्तरम्। अर्द्धरात्रावधि सुखप्रदाः इत्यनेन अर्द्धरात्रात्परमेतेषां रञ्जकत्वाभावात् गानं न कर्त्तव्यमिति सूचितम्। २५।

यथोक्तकाले,—यस्मिन् समये यस्य रागस्य गानं पूर्व्वश्लोकैरुक्तं तस्मिन्नेव समये। पूर्व्वविधानतः पूर्व्वेषां आचार्य्याणां नारदभरतादीनां विधानतः अनुशासनात्। राजाज्ञया, नृपादेशेन तु सदा कालाकालविचारमकृत्वैव गेयाः, राजेच्छाया नित्यत्वादितिभावः। तथाचोक्तं,—समयोल्लङ्घनं गाने सर्व्वनाशकरं ध्रुवम्। अभीष्टे नृपाज्ञायां रङ्गभूमौ न दोषदम्। इति। २६।

अथ ऋतवः।

श्रीरागो रागिणीयुक्तः शिशिरे गीयते बुधैः।
वसन्तः ससहायस्तु वसन्तर्तौ प्रगीयते॥ १७॥
भैरवः ससहायस्तु ऋतौ ग्रीष्मे प्रगीयते।
पञ्चमस्तु तथा गेयो रागिण्या सह शारदे॥ १८॥
मेघरागो रागिणीभिर्युक्तो वर्षासु गीयते।
नट्टनारायणो रागो रागिण्या सह हेमके॥ १९॥
यथेच्छया वा गातव्याः सर्व्वर्तुषु सुखप्रदाः॥ २०॥
[ इति रागाणां ऋतुनिर्णयः। इति सोमेश्वरमतम्।

भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः॥ २१॥
मध्यमादिर्भैरवी च वाङ्गाली च वराटिका।
सैन्धवी च पुनर्ज्ञेया भैरवस्य वराङ्गनाः॥ २२॥
तोड़ी खाम्बावती गौरी गुणकी ककुभा तथा।
रागिण्यो रागराजस्य कौशिकस्य वराङ्गनाः॥ २३॥

---

शिशिरे पौषमाघयोरित्यर्थः। ससहायः स्वकीयरागिणीभिरन्वितः। स्वसहायैरित्यपि पाठान्तरम्।१७।

ग्रीष्मर्तौ परिगीयते इति क्वचित्पाठः। शारदे भाद्राश्विनयोः।१८।

हेमके हेमन्ते कार्त्तिकाग्रहायणयोरित्यर्थः।१९।

यथेच्छयेति। यदाहि मधुरस्वरूपे अमृताधारे समर्थविवक्षु जीवस्य गीतेच्छा जायते तदा यत्र तत्र ऋतौ यः कश्चित् रागो गीयमानो न वैरस्यमावहतीतिभावः।२०।

पुरुषाह्वया इत्यत्र पुरुषाः स्मृताः इति पाठान्तरम्।२१।

वाङ्गालीत्यत्र वङ्गाली ज्ञेया इत्यत्र च मेया इत्यपि पाठभेदः।२२।

तोड़ीत्यत्र टोड़ी खाम्बावतीत्यत्र खम्बावती कम्भावती चेति पुस्तकान्तरेषु दृश्यते।२३।

वेलावली रामकिरी देशाख्या पठमञ्जरी ।
ललिता सहिता एता हिन्दोलस्य वराङ्गनाः ॥ ३४ ॥
केदारी कानड़ा देशी कामोदी नाटिका पुनः ।
दीपकस्य प्रियाः पञ्च ख्याता रागविशारदैः ॥ ३५ ॥
वासन्ती मालवी चैव मालश्रीश्च धनासिका ।
आशावरी च विज्ञेयाः श्रीरागस्य वराङ्गनाः ॥ ३६ ॥
मल्लारी देशकारी च भूपाली गुर्जरी तथा ।
टक्का च पञ्चमी भार्या मेघरागस्य योषितः ॥ ३७ ॥

[ इति हनूमन्मते रागरागिण्यः ।

अथ रागार्णवमतम् ।

भैरवः पञ्चमो नाटो मल्लारो गौड़मालवः ।
देशाख्यश्चेति षड्रागाः प्रोच्यन्ते लोकविश्रुताः ॥ ३८ ॥
बाङ्गालीयं गुणकिरी मध्यमादिर्वसन्तकः ।
धनाश्रीश्चेति पञ्चैते रागा भैरवसंश्रयाः ॥ ३९ ॥
ललिता गुर्जरी देशी वराड़ी रामकृत्तथा ।
मता रागार्णवे रागाः पञ्चैते पञ्चमाश्रयाः ॥ ४० ॥

---

रामकिरीत्यत्र रामकरी पठमञ्जरीत्यत्र च पटमञ्जरीति केचित् पठन्ति । ३४ ।

कानड़ा इत्यत्र कानरा कामोदीत्यत्र च कामोटी इति पाठान्तरम् । ३५ ।

गुर्जरीत्यत्र गुञ्जरी टक्का इत्यत्र टक्कः इत्यपि पाठभेदः । ३६ ।

गुणकिरीत्यत्र गुणकरी धनाश्रीरित्यत्र च धानश्रीश्चेति पाठभेदो दृश्यते । ३९ ।

वराड़ीत्यत्र वराटीति पाठान्तरम् । ४० ।

नट्टनारायणः पूर्वं गान्धारः सालगस्तथा।
ततः केदारकर्णाटौ पञ्चैते नाटसंश्रयाः ॥ ४१ ॥

मेघमल्लारिका मालकौशिकः पटमञ्जरी।
आसावरीति विज्ञेया रागा मल्लारसंश्रयाः ॥ ४२ ॥

हिन्दोलस्त्रिवणाम्भारी गौरी च पठहंसिका।
पञ्चैते रागनामानो गौडमाश्रित्य संस्थिताः ॥ ४३ ॥

भूपाली च कुडायी च कामोदी नाटिका तथा।
वेलावलीति विज्ञेया रागा देशाख्यसंश्रयाः ॥ ४४ ॥

[ इति रागार्णवमतम्।

न तालानां न रागाणामन्तः कुत्रापि विद्यते।
इदानीं रागरागिण्योरुदाहरणमुच्यते ॥ ४५ ॥

अथ भैरवः।

धैवतांशग्रहन्यासो रिपहीनत्वमागतः।
भैरवः स तु विज्ञेयो धैवतादिकमूर्च्छनः।
विकृतो धैवतो यत्र औडवः परिकीर्त्तितः ॥ ४६ ॥

---

पञ्चैते नाटसंश्रयाः इत्यत्र पञ्चैव नाटसंश्रिताः इति केचित् पठन्ति ॥४१॥

यः स्वरोऽंशः स एव ग्रह इति नियमात् यस्मिन् रागे यस्य स्वरस्य चांशत्वं ग्रहत्वमपि तस्यैवेति ज्ञेयम्। रिपहीनत्वमागतः ऋषभपञ्चमवर्जितः इत्यर्थः। रिपहीनोऽयं मान्तम इति क्वचित्पाठः। औडवः पञ्चभिः स्वरैर्गीतः। सम्पूर्णोऽयं राग इति सङ्गीतनारायणसोमेश्वरयोर्मतम्। ऋषभमाध्यमवर्जितोऽयमिति सङ्गीतनिबन्धकाराः, यदुक्तं—'भिन्नषड्जसमुत्पन्नो भैरवोऽपि स्वर्वर्जितः' इति। भैरव आदिराग इत्यत्र भैरवरागस्तत्र इति क्वचित्पाठः। ४६।

ध्यानम् ।

गङ्गाधरः शशिकलातिलकस्त्रिनेत्रः
सर्पैर्विभूषिततनुर्गजकृत्तिवासाः ।
भास्वत्त्रिशूलकर एष नृमुण्डधारी
शुभ्राम्बरो जयति भैरव आदिरागः ॥

उदाहरणम् ।

ध नि स ग म ध ।

[ इति भैरवरागः ।

अथ मध्यमादिः ।

मध्यमादिश्च रागाङ्गा मन्द्रांशन्यासमध्यमा ।
षड्जस्वरैस्तु गातव्या मध्यमादिकमूर्च्छना ।
सम्पूर्णा कथिता तज्ज्ञैः रिधहीना क्वचिन्मता ॥ ४७ ॥

ध्यानम् ।

यता सहासं परिरभ्य कामं
सञ्चुम्बितास्या कमलायताक्षी ।
स्वर्णच्छविः कुङ्कुमलिप्तदेहा
सा मध्यमादिः कथिता मुनीन्द्रैः ॥

उदाहरणम् ।

म प ध नि स रि ग म ।
अथवा म प नि स ग म ।

[ इति मध्यमादिः ।

अथ भैरवी ।

सम्पूर्णा भैरवी ज्ञेया मन्द्रांशन्यासमध्यमा ।
सौवीरी मूर्च्छना ज्ञेया मध्यमग्रामचारिणी ।
केचिदेषा भैरववत् स्वरैर्ज्ञेया विचक्षणैः ॥ ४८ ॥

ध्यानम्।

स्फटिकरचितपीठे रम्यकैलासशृङ्गे
विकचकमलपत्रैरर्चयन्ती महेशम्।
करधृतघनवाद्या पीतवर्णायताक्षी
सुकविभिरियमुक्ता भैरवी भैरवस्त्री॥

उदाहरणम्।

म प ध नि स रि ग म।

अथवा ध नि स ग म ध।

[ इति भैरवी।

बाङ्गाली औड़वा ज्ञेया मध्यमन्यासषड्जभाक्।
रिधहीना च विज्ञेया मूर्छना प्रथमा मता।
पूर्णा वा मलवोपेता कल्लिनाथेन भाषिता॥ ४८॥

ध्यानम्।

कक्षानिवेशितकरण्डधरायताक्षी
भास्वत्त्रिशूलपरिमण्डितवामहस्ता।
भस्मोज्ज्वला निबिडबद्धजटाकलापा
बाङ्गालिकेत्यभिहिता तरुणार्कवर्णा॥

उदाहरणम्।

स ग म प नि स।

अथवा म प ध नि स रि ग म।

[ इति बाङ्गाली।

---

बाङ्गाली औड़वा ज्ञेया इत्यत्र बाङ्गाली षाड़वैव इति क्वचित्पाठः। प्रथमा मूर्च्छना षड्जग्रामस्य आद्या मूर्च्छना उत्तरमन्द्रा। भाषिता प्रणीता। सोमेश्वर-नारायण-सुधाकर-सिंहभूपालानां मते इयं सम्पूर्णा। कक्षा कटिबन्धः काञ्ची वा। करण्डः पुष्पपात्रम्। ४८।

अथ वराटी ।

षड्जग्रहांशकन्यासा वराटी कथिता बुधैः ।
प्रथमा मूर्च्छना यस्याः सम्पूर्णा कीर्त्तिवर्द्धिनी ॥ ५० ॥

ध्यानम् ।

विनोदयन्ती दयितं सुकेशी
सुकङ्कणा चामरचालनेन ।
कर्णे दधाना सुरवृक्षपुष्पम्
वराङ्गनेयं कथिता वराटी ॥

उदाहरणम् ।

स रि ग म प ध नि स ।

[ इति वराटी ।

अथ सैन्धवी ।

षड्जग्रहांशकन्यासा पूर्णा सैन्धविका मता ।
मूर्च्छनोत्तरमन्द्राढ्या केचित् षाड़विका मता ।
रिहीना तु भवेन्नित्यं रसे वीरे प्रयुज्यते ॥ ५१ ॥

---

प्रथमा मूर्च्छना उत्तरमन्द्रा । दयितं प्रियं भैरवमित्यर्थः । विनोदयन्ती आनन्दयन्ती । कङ्कणः कराभरणभेदः । सुरवृक्षपुष्पं पारिजातकुसुमम् । ५० ।

षाड़विका इत्यत्र षड्जभया इति पाठान्तरम् । सङ्गीतसारे इयं ग्रहांशन्यासपञ्चमेति कथिता, यदुक्तं—सम्पूर्णा सैन्धवी ज्ञेया ग्रहांशन्यासपञ्चमा । मध्याह्नात् पर्व्वतो गेया शृङ्गारे करुणेऽपि च । इति । ऋषभपञ्चमवर्जिता औड़वेयमिति केषाञ्चिन्मतम् । बन्धुजीवं पुष्पविशेषः बाधुजीति भाषा । ५१ ।

ध्यानम् ।

सिन्दूरपाणिः प्रियभक्तियुक्ता
रक्ताम्बरा धारितपद्मबीजा ।
प्रवृद्धकोपा रणधीरयुक्ता
सा भैरवी भैरवरागिणीयम् ॥

उदाहरणम् ।

स रि ग म प ध नि स ।

अथवा स ग म प ध नि स ।

[ इति भैरवी ।

[ इति पञ्चभार्यान्वितो भैरवः ।

अथ मालवकौशिकः ।

षड्जग्रहांशकन्यासः पूर्णो मालवकौशिकः ।
मूर्च्छना प्रथमा ज्ञेया काकलीस्वरमण्डिता ॥ ५२ ॥

ध्यानम् ।

आरक्तवर्णो धृतरक्तयष्टिः
वीरः सुवीरेषु कृतप्रवीर्यः ।
वीरैर्वृतो वैरिकपालमाला-
माली मतो मालवकौशिकोऽयम् ॥

उदाहरणम् ।

स रि ग म प ध नि स ।

अथवा

स नि ध प म ग रि स ।

[ इति मालवकौशिकः ।

---

हरिभट्टीयपुस्तके तु 'सम्पूर्णः कौशिको मतः' इति पाठः । काकली-स्वरसम्युता इति पाठान्तरम् । कृतप्रवीर्यः इत्यत्र कृतप्रचारः इति पाठभेदः । वैरिणां रिपूणां कपालमाला करोटिसमूहः, तन्माला विद्यते यस्यासौ ॥५२॥

अथ तोडी।

मध्यमांशग्रहन्यासा सौवीरी मूर्च्छना मता।
सम्पूर्णा कथिता तज्ज्ञैस्तोडी श्रीकौशिके मता।
षड्जांशन्यासषड्जाद्या केचिदेनां प्रचक्षते॥ ५३॥

ध्यानम्।

तुषारकुन्दोज्ज्वलदेहयष्टिः
काश्मीरकर्पूरविलिप्तदेहा।
विनोदयन्ती हरिणं वनान्ते
वीणाधरा राजति तोडिकेयम्॥

उदाहरणम्।

म प ध नि स रि ग म।

अथवा।

स रि ग म प ध नि स।

[ इति तोडी।

अथ खाम्बावती।

धैवतांशग्रहन्यासा षाडवा त्यक्तपञ्चमा।
खाम्बावती च विज्ञेया मूर्च्छना पौरवी मता॥ ५४॥

---

सौवीरी नाम मध्यमग्रामस्य प्रथमा मूर्च्छना। तोडी श्रीकौशिके मता इत्यत्र 'तोडी श्रीकैशिके मता' 'तोडी स्त्री कैशिके मता' 'तोडी कौशिकसुन्दरी' इत्यादिपाठभेदा दृश्यन्ते। केचिदेनामित्यत्र 'केचिदत्र' षड्जांशन्यासषड्जामित्यत्र 'षड्जांशन्यासषड्जञ्च' इत्यपि पाठान्तरमस्ति। काश्मीरेण कुङ्कुमेन कर्पूरेण च विलिप्तः चर्चितः देहो यस्याः सा। हरिणं मृगं, विनोदयन्ती वीणावादनेन सन्तोषयन्ती। ५३।

त्यक्तपञ्चमा पञ्चमस्वरवर्जिता अतएव षाडवा षड्भिः स्वरैर्गीता। पौरवी नाम मध्यमग्रामे षष्ठी मूर्च्छना। खाम्बावतीत्यत्र खम्बावतीत्यपि भवति। सोमेश्वरमते खाम्बावती सम्पूर्णा, यदुक्तं—'खाम्बावती तु सम्पूर्णा शृङ्गारे निशि गीयते'। इति। सौन्दर्य्येण रूपेण, लावण्येन च, मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिति स्मृतम्।




ध्यानम्।

श्यामावती स्यात् सुखदा रसज्ञा
सौन्दर्य्यलावण्यविभूषिताङ्गी।
गानप्रिया कोकिलनादतुल्या
प्रियम्वदा कौशिकरागिणीयम्॥

उदाहरणम्।

ध नि स रि ग म ध।

। इति श्यामावती।

अथ गौरी।

ग्रहांशन्यासषड्जा स्यात्रिपवर्ज्या सुखप्रदा।
मूर्च्छना प्रथमा ज्ञेया गौरी सर्व्वाङ्गसुन्दरी॥ ५५॥

ध्यानम्।

निवेशयन्ती श्रवणेऽवतंसम्
आम्राङ्कुरं कोकिलनादरम्यम्।
श्यामा मधुस्यन्दिसुकण्ठनादा
गौरीयमुक्ता किल कोहलेन॥

---

इत्युक्तलावण्येन कान्तिविशेषेण च विभूषितं अङ्गं यस्याः सा। प्रियम्वदा मधुरभाषिणी। ५४।

रिपवर्ज्या ऋषभपञ्चमहीना। नारायणमते केवलपञ्चमहीनत्वादियं षाड़वा। कल्लिनाथादीनां मते तु इयं सम्पूर्णा। प्रथमा मूर्च्छना षड्ज-ग्रामस्य उत्तरमन्द्रा। श्रवणे कर्णे, अवतंसं कर्णभूषणम्। कोहलो नाम सङ्गीतशास्त्रकारः कश्चन प्रख्यातः पण्डितः, यदुक्तं रत्नाकरे,—सदाशिवः शिवो ब्रह्मा भरतः कश्यपो मुनिः। मतङ्गः याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ। इति। किल कोहलेन इत्यत्र 'अतिकुतूहलेन' इति केचित् पठन्ति तच्चिन्त्यम्। नेपालदेशीयपुस्तके तु स ग म ध नि स ग इति गौरीनिर्माणप्रकारो लिखितोऽस्ति। ५५।

उदाहरणम् ।

स ग म ध नि स ।

अथवा

स नि ध म ग स ।

[ इति गौरी ।

अथ गुणकिरी ।

रिधहीना गुणकिरी औडवा परिकीर्त्तिता ।
निग्रहांशा तु नित्या सा कैश्चित् षड्जाश्रया मता ।
रजनी मूर्च्छना चाऽत्र मालवाश्रयिणी तु सा ॥ ५९ ॥

ध्यानम् ।

शोकाभिभूतनयनाश्रुपयोदवृष्टि:
भस्मानना धरणिधूसरगात्रयष्टि: ।
आलुलितचारुकबरी प्रियदूरदृष्टा
संकीर्त्तिता गुणकिरी करुणोत्कटाङ्गी ॥

उदाहरणम् ।

नि स ग म प नि ।

अथवा

स ग म प नि स ।

[ इति गुणकिरी ।

---

रिधहीना ऋषभधैवतवर्जिता । षड्जाश्रयेत्यत्र षड्जग्रहेति क्वचित् पाठः । मतङ्गमते इयं सम्पूर्णा, यदुक्तं ;—' पूर्णा गुणकिरी प्रोक्ता मतङ्गमुनिसम्मता ।' इति ध्वनिमञ्जर्य्यां, गीतसिद्धान्तभास्करेऽपि एवदुक्तम् । नित्या सा इत्यत्र निम्नांशा इति पाठान्तरम् । मालवाश्रयिणीत्यत्र भैरवाश्रयणीति केचिद् वदन्ति । करुणोत्कटाङ्गीत्यत्र करुणार्द्रदृष्टिरिति केचित् पठन्ति । ५९ ।

अथ ककुभा ।

धैवतांशग्रहन्यासा सम्पूर्णा ककुभा मता ।

तृतीयप्रहरोत्पन्ना शृङ्गाररसमण्डिता ॥ ५७ ॥

ध्यानम् ।

सुपोषिताङ्गी रतिमण्डिताङ्गी

चन्द्रानना चम्पकदामयुक्ता ।

कटाक्षिणी स्यात् परमा विचित्रा

दानेन युक्ता ककुभा मनोज्ञा ॥

उदाहरणम् ।

ध नि स रि ग म प ध ।

[ इति ककुभा ।

[ इति षड्भार्यासहितो मालवकौशिकः ।

अथ हिन्दोलः ।

हिन्दोलको रिधत्यक्तः सत्रयो गदितो बुधैः ।

मूर्च्छना शुद्धमध्या स्यादौडवः कामकौतुकः ॥ ५८ ॥

ध्यानम् ।

नितम्बिनीमन्दतरङ्गितासु

दोलासु खेलासुखमादधानः ।

खर्वः कपोतद्युतिकामयुक्तः

हिन्दोलरागः कथितो मुनीन्द्रैः ॥

---

सुपोषिताङ्गीत्यत्र 'सुशोभिताङ्गी' इति, परमा विचित्रा इत्यत्र 'परमार्थचित्ता' इति च पाठान्तरम् । ५७ ।

मतान्तरे हिन्दोलरागः ऋषभपञ्चमवर्जितः । ५८ ।

उदाहरणम्।

स ग म प नि स।

[स नि प म ग स]*

[ इति हिन्दोलः।

अथ वेलावली।

धैवतांशग्रहन्यासा पूर्णा वेलावली मता।

पौरवी मूर्च्छना ज्ञेया रसे वीरे प्रयुज्यते॥ ५८॥

ध्यानम्।

सङ्केतदीक्षां दयिते च दत्त्वा

वितन्वती भूषणमङ्गकेषु।

मुहुः स्मरन्ती स्मरमिष्टदेवम्

वेलावली नीलसरोजकान्तिः॥

उदाहरणम्।

ध नि स रि ग म प ध।

[ इति वेलावली।

अथ रामकिरी।

षड्जग्रहांशकन्यासा पूर्णा रामकिरी मता।

मूर्च्छना प्रथमा ज्ञेया करुणे सा प्रयुज्यते॥

रिधत्यक्ताऽथवा प्रोक्ता केचित् पञ्चमवर्जिता।

त्रिविधा सा समुद्दिष्टा सम्पूर्णा षाड़वौड़वा॥ ६०॥

---

पौरवी नाम मध्यमग्रामस्य षष्ठी मूर्च्छना, तत्स्वरूपं यथा,—ध नि स रि ग म प। ज्ञेया इत्यत्र यस्याः इति पाठान्तरम्। प्रयुज्यते अत्र प्रगीयते इति क्वचित्पाठः। सङ्केतदीक्षां दयिते ददन्ती इति च पाठान्तरम्। ५८।

प्रथमा मूर्च्छना अत्र षड्जग्रामस्य उत्तरमन्द्रा। प्रयुज्यते अत्र प्रगीयते इति पाठान्तरम्। रिधत्यक्ता तु केचिच्च केचित् पञ्चमवर्जिता।

---

* बन्धनीमध्यवर्त्ती पाठः क्वाचित्कः।

ध्यानम्।

हेमप्रभा भास्वरभूषणा च
नीलं निचोलं वपुषा वहन्ती।
कान्ते समीपे कमनीयकण्ठा
मानोन्नता रामकिरी मतेयम्॥

उदाहरणम्।

स रि ग म प ध नि स। (सम्पूर्णा)

अथवा

स ग म प नि स। (औड़वा)

अथवा

स रि ग म ध नि स। (षाड़वा)

[ इति रामकिरी।

अथ देशाख्या।

देशाख्या षाड़वा ज्ञेया गमकेन विभूषिता।
ऋषभेण वियुक्ता सा शार्ङ्गदेवेन कीर्त्तिता।
मूर्च्छना हरिणाश्वाऽत्र सम्पूर्णां केचिदूचिरे॥ ६१॥

---

षाड़वा औड़वा प्रोक्ता सम्पूर्णा च त्रिधा मता॥ इति पाठान्तरम्। सोमेश्वरकृतरागविबोधे सङ्गीतनारायणे च इयं सम्पूर्णा। भास्वराणि दीप्तिमन्ति भूषणानि यस्याः सा तथोक्ता। नीचोलं वसनम्। रामकिरी अथ रामकरी इति पठन्ति केचित्। उदीच्यास्तु स रि ग म ध नि स अथवा स रि ग म प नि स इत्युदाहरणमाहुः। ६०।

वियुक्ता सा इत्यत्र वियुक्ताऽसौ इति पाठान्तरम्। शार्ङ्गदेवः सङ्गीतरत्नाकरस्य रचयिता। हरिणाश्वा नाम मध्यमग्रामस्य द्वितीया मूर्च्छना। वीरे रसे अङ्कितः चिह्नितः, रोमहर्षः पुलकः, यया सा, वीररसानुरागिणी-त्यर्थः, शिरोधरायां दयितग्रीवायां, बद्धः विन्यासबाहुः यया सा, कान्त-

ध्यानम्।

वीरे रसे व्यञ्जितरोमहर्षा
शिरोधरावद्धविलासबाहुः।
प्रांशुः प्रचण्डा किल चन्द्ररागा
देशाख्यसंज्ञा कथिता मुनीन्द्रैः॥

उदाहरणम्।

ग म प ध नि स ग।

अथवा

ग म प ध नि स रि ग।

[ इति देशाख्या।

अथ पठमञ्जरी।

पञ्चमांशग्रहन्यासा सम्पूर्णा पठमञ्जरी।
शुद्धका मूर्च्छना ज्ञेया रसिकानां सुखप्रदा॥ ६२॥

ध्यानम्।

वियोगिनी कान्तविशीर्णगात्रा
स्रजं वहन्ती वपुषा च शुष्का।
आश्वास्यमाना प्रियया च सख्या
विधूसराङ्गी पठमञ्जरीयम्॥

उदाहरणम्।

प ध नि स रि ग म प।

[ इति पठमञ्जरी।

---

कण्ठासक्तभुजलता इत्यर्थः। चन्द्रस्य राग इव रागो यस्याः, शशिकर-गौरकान्तिरित्यर्थः। प्रांशुरुन्नता। ६१।

सम्पूर्णा इत्यत्र 'पर्णा च' इति पाठान्तरम्। शुद्धका नाम मध्यम-ग्रामस्य सप्तमी मूर्च्छना। कान्तं मनोरमं विशीर्णं मियविरहजर्जं, गात्रं देहयष्टिर्यस्याः सा। ६२।

अथ ललिता ।

रिपवर्ज्या च ललिता औडुवा सत्रया मता ।
षड्जांशा मुद्रमध्या स्यात् सम्पूर्णां केचिदूचिरे ।
धैवतत्रयसंयुक्ता द्वितीया ललिता मता ॥ ६२ ॥

ध्यानम् ।

प्रोत्फुल्लसप्तच्छदमाल्यधारी
युवा च गौरोऽब्जदलायताक्षः ।
विनिःश्वसन् दैववशात् प्रभाते
यस्याः पतिः सा ललिता प्रदिष्टा ॥

उदाहरणम् ।

स ग म ध नि स ।

अथवा

स रि ग म प ध नि स । ( इति प्रथमा )

ध नि स ग म ध । ( इति द्वितीया )

[ इति ललिता ।

इति पञ्चभार्यान्विततो हिन्दोलः ।

---

प्रोत्फुल्लं विकसितं सप्तच्छदं छातिम इति ख्यातं पुष्पम् । अत्र ध्यानस्य चतुर्थपादे 'विलासवेशो ललितः प्रदिष्टः' इति केचिदाहुः, तच्चिन्त्यं, रागभार्यायाः ललितायाः पुंस्त्वनिर्देशानौचित्यात् । पुस्तकान्तरे तु ललिता-विशेषणत्वेन सर्वेषां पदानामुपादानं कृतं तदेव समीचीनमिति मन्ये, यथा—

प्रफुल्लसप्तच्छदमाल्यकण्ठा सुगौरकान्तिर्युवती सुदृष्टिः ।
विनिःश्वसन्ती सहसा प्रभाते विलासवेशा ललिता प्रदिष्टा ॥ इति ।६३।

अथ दीपकः ।

षड्जग्रहांशकन्यासः सम्पूर्णो दीपको मतः ।
मूर्च्छना शुद्धमध्या स्यादुगातव्या गायनैः सदा ॥ ६४ ॥

ध्यानम् ।

बालारतार्थं प्रविलीनदीपे
गृहेऽन्धकारे सुभगं प्रहृत्तः ।
तस्याः शिरोभूषणरत्नदीपै-
र्लज्जां दधौ दीपकरागराजः ॥

उदाहरणम् ।

स रि ग म प ध नि स ।

[ इति दीपकः ।

अथ केदारी ।

केदारी रिधहीना स्यादौडवा परिकीर्त्तिता ।
नितया मूर्च्छना मार्गी काकलीस्वरमण्डिता ॥ ६५ ॥

[ इति केदारी ।

---

गायनैरित्यत्र गायकैरिति पाठान्तरम् । बाला नवयौवनसम्पन्ना, तस्या रतार्थं सम्भोगार्थं । प्रविलीनो निर्व्वापितो दीपोयत्र तस्मिन् । शिरोभूषणानि रत्नान्येव दीपाः तैः । लज्जां दधावित्यत्र लज्जां प्रकुर्व्वन् ज्ञतवान् प्रदीपम् इति पाठान्तरम् । ६४ ।

मार्गी नाम मध्यमग्रामस्य पञ्चमी मूर्च्छना । काकलीस्वरलक्षणं स्वराध्याये कथितम् । सितः शुभ्रः चन्द्रः मौलिः शिरोभूषणं मौलौ चूडायां वा यस्याः सा । नागएव उत्तरीयम् उत्तराच्छादनं यस्याः सा । धृतं योगपट्टं योगिधार्य्यं पट्ट-सूत्रं यया सा । धृतयोगपीठा इतिपाठे तु धृतं गृहीतं योगपीठं योगयोग्यमासनं यया सा, योगासने आसीना इत्यर्थः । गङ्गाधरध्याने शिवसमाधौ निमग्नं चित्तं यस्याः सा, वेदान्तरस्यार्थसूचनेन

ध्यानम्।

जटां दधाना सितचन्द्रमौलिः
नागोत्तरीया धृतयोगपट्टा।
गङ्गाधरध्याननिमग्नचित्ता
केदारिका दीपकरागिणीयम्॥

उदाहरणम्।

नि स ग म प नि नि।

अथ कानड़ा।

त्रिनिषादाऽथ सम्पूर्णा निषादो विकृतो भवेत्।
मार्गी च मूर्च्छना ज्ञेया कानड़ेयं सुखप्रदा॥ ६६॥

ध्यानम्।

कृपाणपाणिर्गजदन्तखण्ड-
मेकं वहन्ती निजदक्षकेन।
संस्तूयमाना सुरचारणौघैः
सा कानड़ेयं किल दिव्यमूर्त्तिः॥

उदाहरणम्।

नि स रि ग म प ध नि।

[इति कानड़ा।

---

मनसा मल्लारेवं ध्यायन्तीत्यर्थः। रागविबोधकारेण सोमेश्वरेण इयं केदारी सम्पूर्णजातिरागिणीमध्ये परिगणिता। ६५।

कानड़ेत्यत्र केचित् कर्णाटइति रागवाचकं पुंलिङ्गशब्दं निर्दिश्य तद्विशेषणपराणि पुंलिङ्गानि पठन्ति, यथा——

त्रिनिषादोऽथ सम्पूर्णो निषादो विकृतो भवेत्।
मार्गी च मूर्च्छना ज्ञेया कर्णाटोऽयं सुखप्रदः॥

अथ देशी।

देशी पञ्चमहीना स्यादृषभन्याससंयुता।
कलोपनतिका ज्ञेया मूर्च्छना विकलर्षभा॥ ९७॥

ध्यानम्।

निद्रालसं सा कपटेन कान्तं
विबोधयन्ती सुरतोत्सुकेव।
गौरी मनोज्ञा शुकपिच्छवस्त्रा
ख्याता च देशी स्वरपूर्णचित्ता॥

उदाहरणम्।

रि ग म ध नि स रि।

[इति देशी।

अथ कामोदी।

धांशन्यासग्रहा पूर्णा पौरवी मूर्च्छना मता।
मल्लारनिकटे गेया कामोदी सर्व्वसम्मता।
शिवभूषणकेदारयुक्ता सर्व्वसुखप्रदा॥ ९८॥

---

ध्यानम्।

कृपाणपाणिर्गजदन्तपत्रमेकं वहन् दक्षिणकर्णकेन।
संस्तूयमानः सुरचारणौघैः कर्णाटरागः शिखिपाकमूर्त्तिः॥

अस्या दीपकरागभार्य्यात्वात् पुंस्त्वं न सङ्गच्छते, अतएव मूले कानड़ेति विशेषितुमिदं ग्रः कृतः। कानड़ेत्यत्र कर्णाटी इत्यपि पाठान्तरम्। भरतमतसम्मतेयं कानड़ा रागिणी। नारदसंहितायामस्या गानवेला सायं-कालः, प्रायेणेयं रात्रौ गीयते। ९९।

कलोपनतिका ( कलोपनता ) नाम मध्यमग्रामस्य तृतीया मूर्च्छना। शुकपिच्छमिव विविधभासुरवर्णोज्ज्वलमित्यर्थः, वस्त्रं यस्याः सा। ९७।

मता इत्यत्र युता, गेया इत्यत्र च ज्ञेया इति वा पाठः। कामोदी सर्व्व-सम्मता इत्यत्र कामोदी सा निगद्यते इति पाठान्तरम्। पीतं वसनं

ध्यानम्।

पीतं वसाना वसनं कपोती
वने वसन्ती पिकनादरूना।
विलोकयन्ती विदिशोऽतिभीता
कामोदिका कान्तमनुस्मरन्ती॥

उदाहरणम्।

ध नि स रि ग म प ध।

[ इति कामोदी।

अथ नाटिका।

ग्रहांशन्यासषड्जा स्यात् सम्पूर्णा नाटिका मता।
प्रथमा मूर्च्छना ज्ञेया गमकैर्विविधैर्युता॥ ६८॥

ध्यानम्।

तुरङ्गमस्कन्धनिषण्णगात्रः
सुवर्णप्रभः शोणितशोणगात्रः।
संग्रामभूमौ विचरन् प्रतापी
नटोऽयमुक्तः किल रागमूर्त्तिः॥

उदाहरणम्।

स रि ग म प ध नि स।

[ इति नाटिका षड्जन्दो वा।

इति षड्भार्य्यान्वितो दीपकः।

---

वसाना परिदधाना। पिकनादेन कोकिलरवेण रूना खन्ना, पिकनादस्य उद्दीपनविभावत्वात् उद्दीपनविभावाभावे वियोगिनीजनमनःखन्दायकत्वा-दिति भावः। ६८।

प्रथमा मर्च्छना उत्तरमन्द्रा। गमकैः स्वरकम्पभेदैः। केषाञ्चिन्मते नाटिका नट्टनारायणस्य भार्य्या, मतान्तरे चेयं कर्णाटस्य प्रिया, तन्मते अस्या ध्यानं यथा—

अथ श्रीरागः।

श्रीरागः स च विख्यातः सत्रयेण विभूषितः।
पूर्णः सर्व्वगुणोपेतो मूर्च्छना प्रथमा मता।
केचित्तु कथयन्त्येनमृषभत्रयसंयुतम्॥ ७०॥

ध्यानम्।

अष्टादशाब्दः स्मरचारुमूर्त्तिः
धीरो लसत्पल्लवकर्णपूरः।
षड्जादिसेव्योऽरुणवस्त्रधारी
श्रीराग एष क्षितिपालमूर्त्तिः॥

उदाहरणम्।

स रि ग म प ध नि स।

अथवा

रि ग म प ध नि स रि।

[ इति श्रीरागः।

---

चिरं नटन्ती शुभरङ्गमध्ये विचित्रनानाभरणा कृशाङ्गी।
सुगीततालेषु लतावधाना नाटी सुनाटीपरिधानशीला॥

यथा वा—

विदेशकस्य कान्तस्य कृत्वाज्ञामतिविह्वला।
नटाबहितवेशाढ्या रुदन्ती काकमादरात्॥ इति। ६९।

सोमेश्वरकल्लिनाथयोर्म्मते अयं प्रथमो रागः, भरतादीनां मते तु अयं पञ्चमो रागः। अष्टादशाब्दः अष्टादशवर्षीयः, एतेनास्य पूर्णयौवनं कथितम्। अरुण, शोभमानः पल्लवकर्णपूरः किशलयरचितकर्णाभरणं यस्य सः। ७०।

अथ वसन्ती।

वसन्ती स्यात्तु सम्पूर्णा सत्रया कथिता बुधैः।
श्रीरागमूर्च्छनैवात्र ज्ञेया रागविशारदैः॥ ७१॥

उदाहरणम्।

शिखण्डिबर्होच्चयबद्धचूडा
कर्णावतंसीकृतशोभनाम्रा।
इन्दीवरश्यामतनुः सुचित्रा
वसन्तिका स्यादलिमञ्जुलश्रीः॥

उदाहरणम्।

स रि ग म प ध नि स।

[ इति वासन्ती, अथवा वसन्ती।

अथ मालवी।

औड़वा मालवी ज्ञेया निन्नया रिपवर्जिता।
रजनी मूर्च्छना चात्र काकलीस्वरमण्डिता॥ ७२॥

---

श्रीरागमूर्च्छना प्रथमा मूर्च्छना, सा च उत्तरमन्द्रा। शिखण्डिबर्हो-
च्चयेन मयूरपिच्छगुच्छेन बद्धा रचिता चूड़ा शिखा यया सा। अवतंसी-
कृतं शोभनम् आम्रं चूतमुकुलं यया सा, रसालमुकुलकृतकर्णाभरणा
इत्यर्थः। इन्दीवरश्यामतनुः नीलकमलमेचककान्तिः। अलीनामिव मञ्जुला
मनोज्ञा श्रीः शोभा यस्याः सा, भ्रमरमधुरकान्तिरित्यर्थः। पुस्तकान्तरेऽस्याः
ध्याने पुंस्त्वेन निर्देशः कृतः यथा—

शिखण्डिबर्होच्चयबद्धचूडः कर्णावतंसीकृतशोभनाम्रः।
इन्दीवरश्यामतनुर्विलासी वसन्तकः स्यादलिमञ्जुलश्रीः। इति।७१।

मालवी औड़वा ज्ञेया इति क्वचित्पाठः, स हि सन्धिविश्लेषदोषादसमञ्जसः।
रजनी नाम षड्जग्रामस्य द्वितीया मूर्च्छना। शशाङ्केन श्रीरागेण संचुम्बितं
वक्त्रपद्मं वदनकमलं यस्याः सा। शुकस्येव कोमलवर्णविशिष्टा इत्यर्थः, द्युतिः

ध्यानम्।

स्वकान्तसंचुम्बितवक्त्रपद्मा

शुकद्युतिः कुण्डलिनी प्रमत्ता।

सङ्केतशालां विशती प्रदोषे

मालाधरा मालविकेयमुक्ता॥

उदाहरणम्।

नि स ग म ध नि।

[ इति मालवी।

अथ मालवश्रीः।

मालवश्रीश्च रागाङ्गा पूर्णा सत्रयभूषिता।

मूर्छनोत्तरमन्द्रा स्याच्छृङ्गाररससमन्विता॥ ७३॥

ध्यानम्।

रक्तोत्पलं करतले दधाना

विभावयन्ती तनुदेहवल्ली।

रसालवृक्षस्य तले निषण्णा

शोकस्थिता सा किल मालवश्रीः॥

उदाहरणम्।

स रि ग म प ध नि स।

[ इति मालवश्रीः।

---

शुकोदकान्तिर्यस्याः। कुण्डलिनी प्रशस्तकुण्डलवती, कुण्डलं कर्णभूषणभेदः। प्रदोषे रजनीमुखे। पुस्तकान्तरेऽस्याः पुंस्त्वेन निर्देशः कृतः, यथा—

नितम्बिनीचुम्बितवक्त्रपद्मः शुकद्युतिः कुण्डलवान् प्रमत्तः।

सङ्केतशालां प्रविशन् प्रदोषे मालाधरो मालवराग एषः॥ इति।७२।

मालश्रीः मालसी चेति अस्याः संज्ञान्तरम्। सोमेश्वरमते इयम् ऋषभ-धैवताभ्यां हीना औडवजातीया। करतले दधाना इत्यत्र करतले नियुक्तम् इति पाठान्तरम्। तनुदेहवल्ली कृशाङ्गी। शोकस्थिता मन्दमधुर-हास्या। ७३।

ध्यानम् ।

श्रीखण्डशैलशिखरे शिखिपिच्छवस्त्रा
मातङ्गमौक्तिकमनोहरहारवल्ली ।
आकृष्य चन्दनतरोरुरगं वहन्ती
साशावरी वलयमुज्ज्वलनीलकान्तिः ॥

उदाहरणम् ।

ध नि स म प ध ।

अथवा

म ध नि स रि ग म ।

[ इति आशावरी ।

[ इति पञ्चभार्य्यासहितः श्रीरागः ।

अथ मेघः ।

मेघः पूर्णो धलयः स्यादुत्तरायतमूर्च्छनः ।
विज्ञतो धैवतो न्यायः श्रृङ्गाररसपूरकः ॥ ७६ ॥

ध्यानम् ।

नीलोत्पलाभवपुरिन्दुसमानवस्त्रः
पीताम्बरस्तृषितचातकयाच्यमानः ।
पीयूषमन्दहसितो घनमध्यवर्त्ती
वीरेषु राजति युवा किल मेघरागः ॥

---

पिच्छवस्त्रा मयूरबर्हवसना । मातङ्गमौक्तिकैर्गजमुक्ताफलैर्मनोहरा हार-वल्ली हारलता यस्याः सा, गजमुक्तारचितां हारयष्टिं बिभ्रतीत्यर्थः । चन्दन-तरोः चन्दनवृक्षात् आकृष्य बहिर्निःसार्य्य, उरगं सर्पं वलयं वहन्ती, सर्परूपं वलयं परिदधाना इत्यर्थः । आशावरी गरिव्यक्ता ग्रहांशो यत्र धैवतः । न्यासः कादीरूपा मोक्ता इत्येवं पाठोऽपि दृश्यते । ७५ ।

उत्तरायता मूर्च्छना यस्याऽसौ । धैवतवर्ज्जितोऽयमिति केषाञ्चिन्मतम् वर्षायां रात्रिशेषेऽस्य गानं कर्त्तव्यम् । नीलोत्पलाभम् इन्दीवरश्यामं वपुः शरीरं यस्याऽसौ । ७६ ।

उदाहरणम्।

ध नि स रि ग म प ध।

[ इति मेघरागः।

अथ मल्लारी।

मल्लारी सपहीना स्याद् धग्रहांशन्यासधैवता।
औड़वा पौरवीयुक्ता वर्षासु सुखदा सदा॥ ७७॥

ध्यानम्।

गौरी तथा कोकिलकण्ठनादा
गीतच्छलेनात्मपतिं स्मरन्ती।
आदाय वीणां मलिना रुदन्ती
मल्लारिका यौवनदूनचित्ता॥

उदाहरणम्।

ध नि रि ग म ध।

[ इति मल्लारी।

अथ देशकारी।

देशकारी तु सम्पूर्णा षड्जन्यासग्रहांशिका।
मूर्च्छना प्रथमा ज्ञेया वैराटीमिश्रिता भवेत्॥ ७८॥

---

मध्यमग्रामस्य षष्ठी मूर्च्छना पौरवी, तया युक्ता। यौवनेन वयःकृतेन मदनतापेन दूनं सन्तप्तं चित्तं यस्याः सा। ७७।

'देशकारी तु सम्पूर्णा ग्रहांशन्यासषड्जभाक्। मूर्च्छना शुद्धमध्या स्यात् काकलीस्वरमण्डिता।' इति पुस्तकान्तरे पाठो दृश्यते। केचिदिदं प्राहुः, कला नृत्यगीतादिचतुःषष्टिप्रकारा विद्या। सम्पूर्णा सम्पूर्णचन्द्रवदना। कमले इव आयते चक्षुषी यस्याः सा। पीनस्तनी पीवरपयोधरा। वल्लतनुः सुवर्णवर्णदेहकान्तिः। 'भर्त्रा समं केलिरतिः सुकेशी' इति पाठान्तरम्। ७८।

ध्यानम्।

भर्त्रा समं केलिकलारसज्ञा
सर्वाङ्गपूर्णा कमलायताक्षी।
पीनस्तनी स्वच्छतनुः सुकेशी
सम्पूर्णचन्द्राननदेशकारी॥

उदाहरणम्।

स रि ग म प ध नि स।

[इति देशकारी।

अथ भूपाली।

षड्जग्रहांशकन्यासा भूपाली कथिता बुधैः।
मूर्च्छना प्रथमा यत्र सम्पूर्णा शान्तिके रसे।
केचित्तु रिपहीनेयमौड़वा परिकीर्त्तिता॥ ७९॥

ध्यानम्।

गौरद्युतिः कुङ्कुमलिप्तदेहा
तुङ्गस्तनी चन्द्रमुखी मनोज्ञा।
कान्तं स्मरन्ती विरहेन दूना
भूपालिकेयं रसशान्तियुक्ता॥

उदाहरणम्।

स रि ग म प ध नि स।

अथवा

स ग म ध नि स।

[इति भूपाली।

अथ गुर्ज्जरी।

षड्जांशन्यासग्रहभा सम्पूर्णा गुर्ज्जरी मता।
पौरवी मूर्च्छना यस्यां षड्जाख्या सह मिश्रिता॥ ८०॥

---

पौरवी मूर्च्छना यस्यामित्यत्र 'सप्तमी मूर्च्छनैतस्याः' इति क्वचित् पाठः। सोमेश्वरमते इयं पञ्चमहीना षाड़वा। इयञ्च केनापि कारणेन

ध्यानम्।

श्यामा सुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लवतल्पमध्ये।
श्रुतिस्वराणां दधती विभागं
तन्त्रीमुखा दक्षिणगुर्ज्जरीयम्॥

उदाहरणम्।

रि ग म प ध नि स रि।

[इति गुर्ज्जरी।

अथ टक्का।

टक्का स्यात्तु निधाषड्जा सम्पूर्णा चादिमूर्च्छना॥ ८१॥

ध्यानम्।

ग्रीष्मासु सुप्तं नलिनीदलानां
वियोगिनी वीक्ष्य विपन्नचित्तम्।
सुवर्णवर्णा त्वरमागता सा
कान्तं भजन्ती किल टक्कसंज्ञा॥

उदाहरणम्।

स रि ग म प ध नि स।

[इति टक्का।

[इति पञ्चमार्यानुगतो मेघरागः।

---

रागविकारे जाते तत्पापप्रायश्चित्तार्थं प्रायेण गीयते, तथाचोक्तं;— 'लोभान्मोहाच्च ये केचिद्गायन्ति च विरागतः। सुरला गुर्ज्जरी तस्य दोषं हन्तीति कथ्यते॥' मलयद्रुमाणां चन्दनतरूणाम्। तल्पं शय्या। तन्त्रीमुखा वीणाव्यग्रा। ८०।

निधावड्जा षड्जधवतयुक्ता। चादिः प्रथमा मूर्च्छना उत्तरमन्द्राख्या यत्र सा तथोक्ता। केचित् 'टक्कः स्यात्तु निधाषड्जः सम्पूर्णश्चादिमूर्च्छनः।' इति पुंलिङ्गमाहुः। ८१।

अथ कल्याणनाटः।

कल्याणनाटो विज्ञेयः सम्पूर्णो रित्रयो मतः।
षड्जत्रयोऽपि कैश्चित्तु सम्प्रदिष्टो मनीषिभिः॥ ८२॥

ध्यानम्।

कृपाणपाणिस्तिलकं ललाटे
सुवर्णवेशः समरे प्रविष्टः।
प्रचण्डमूर्त्तिः किल रक्तवर्णः
कल्याणनाटः कथितो मुनीन्द्रैः॥

उदाहरणम्।

रि ग म प ध नि स रि।

अथवा

स रि ग म प ध नि स।

[ इति कल्याणनाटः।

अथ सारङ्गनट्टा।

सारङ्गनट्टा सम्पूर्णा सत्रयोत्तरमन्द्रजा॥ ८३॥

ध्यानम्।

वीणां दधाना दृढबद्धवेणी
सख्या समं वञ्जुलवृक्षमूले।
जाम्बुनदाभा च निवसदेशा
सारङ्गनट्टा कथिता सुवेशा॥

---

'कृपाणपाणिर्गजदन्तपत्रशरीरवेशः' इति पाठान्तरम्। ८२।

'सारङ्गनाटः सम्पूर्णः सत्रयोत्तरमन्द्रजः' इति पाठान्तरम्। जाम्बूनदाभा सुवर्णवर्णा। वञ्जुलवृक्षमूले वेतसलतातले निवासदेशा इत्यन्वयः। ८३।

अथवा

करधृतवीणा सख्या सखोपविष्टा च कल्पतरुमूले।
दृढतरनिबद्धकवरी सारङ्गी सा सुरङ्गिणी प्रोक्ता॥

उदाहरणम्।

स रि ग म प ध नि स।

[ इति सारङ्गनट्टा।

अथ देवगिरी।

देवगिर्य्याः स्वराः प्रोक्ताः सारङ्गसदृशा बुधैः॥ ८४॥

ध्यानम्।

कादम्बिनीश्यामतनुः सुहासा
तुङ्गस्तनी सुन्दरहारवल्ली।
चित्राम्बरा मत्तचकोरनेत्रा
मदालसा देवगिरी प्रदिष्टा॥

उदाहरणम्।

स रि ग म प ध नि स।

[ इति देवगिरी।

अथ सौरटी।

सौरटी षाड़वा ज्ञेया पञ्चमत्रयसङ्गता।
रिहीना च समाख्याता कैश्चित् षड़्जत्रया मता॥ ८५॥

---

सारङ्गसदृशाइत्यत्र सारङ्गीसदृशाइति पाठान्तरम्। कादम्बिनी मेघमाला, तद्वत् श्यामा तनुर्य्यस्याः सा। चित्रं नानावर्णम् अम्बरं वस्त्रं यस्याः सा। ८४।

सौरटीत्यत्र सौरठीति, सङ्गतेत्यत्र समन्विति पाठान्तरम्। प्रथमश्लोके मिलिताङ्घ्रयष्टिरत्र 'मदनमूर्त्तिं सुधाधगौरा' इति क्वचित पाठः। ८५।

ध्यानम् ।

पीनोन्नतस्तनकृशोभनहारवल्ली

कर्णोत्पलभ्रमरनादविलम्बचित्ता ।

याति प्रियान्तिकमतिश्रयपाङ्गवल्ली

सौराष्ट्रिका शरद्युते मिलिताङ्गयष्टिः ॥

उदाहरणम् ।

प ध नि स ग म प ।

अथवा

स ग म प ध नि स ।

[ इति सौरटी ।

अथ त्रिवणा ।

त्रिवणा सा च विज्ञेया ग्रहांशन्यासधैवता ।

औड़वा रिपहीनेयं विद्वद्भिः परिकीर्त्तिता ॥ ८६ ॥

ध्यानम् ।

चावस्थातरोर्मूले निषण्णा कनकप्रभा ।

नताङ्गी हारललिता कान्तेन त्रिवणा मता ॥

उदाहरणम् ।

ध नि स ग म ध ।

[ इति त्रिवणा ।

---

पाठान्तरं यथा ;—त्रिवणी सा च विज्ञेया ग्रहांशन्यासधैवता । औड़वा सा च विज्ञेया रिपहीना प्रकीर्त्तिता । ध्यानम् ;—रम्भायास्तु तरोर्मूले निषण्णा पीतवर्णभाक् । तन्वङ्गी हारसंयुक्ता प्रियेण त्रिवणी मता । इतिमतङ्गमतदर्पणेऽप्येवम् । सं ।

अथ पहाड़ी ।

षड्जत्रया पहाड़ी स्यात्रिपहीना तथोदिता ।
छाया तैलङ्गदेशीया यस्याः सा परिकीर्त्तिता ॥ ८७ ॥

ध्यानम् ।

वीणोपगायत्यतिसुन्दराङ्गी
रक्ताम्बरा वञ्जुलवृक्षमूले ।
श्रीचन्दनाद्रौ स्थितिकारिणी सा
गौरांगकान्ता कथिता पहाड़ी ॥

उदाहरणम् ।

स ग म ध नि स ।

[ इति पहाड़ी ।

अथ पञ्चमः ।

रागः पञ्चमको ज्ञेयः पहीनः षाड़वो मतः ।
प्रथमा मूर्च्छना यत्र षड्जत्रयविभूषितः ।
केचिद्वदन्ति सम्पूर्णः शृङ्गाररसपूरकः ॥ ८८ ॥

---

षड्जत्रया षड्जत्रययुक्ता । यस्यां तैलङ्गदेशीया छाया विद्यते । नारदसंहितागीतसिद्धान्तभास्करमते इयं पाहिड़ेतिनाम्ना प्रसिद्धा सम्पूर्णा च । केषाञ्चिन्मते इयं पार्व्वतीयजातिभिः समादृता अतएव पाहाड़ीतिसंज्ञया विख्याता । वीणोपगायन्ती वीणावादनं कुर्व्वन्ती । वञ्जुलवृक्षमूले वेतसवृक्षमूले श्रीचन्दनाद्रौ श्रीचन्दनपर्वतकपर्व्वते । ८७ ।

प्रथमा मूर्च्छना अत्र षड्जग्रामस्य उत्तरमन्द्रा । षड्जत्रयविभूषितः षड्जत्रययुक्तः । शृङ्गारविलासनेपथ्यः रक्तवर्णविभूषितवपुः । मधुरो प्रकृत्या प्रभावयन्के सदा प्रियः सर्व्वकालम् सर्वो मनोज्ञः । ८८ ।

ध्यानम् ।

रक्ताम्बरो रक्तविशालनेत्रः
शृङ्गारयुक्तस्तरुणो मनस्वी ।
प्रभातकाले विजयी च नित्यं
सदा प्रियः कोकिलमञ्जुभाषी ॥

उदाहरणम् ।

स रि ग म ध नि ।

अथवा ।

स रि ग म प ध नि ।

इति पञ्चमो रागः ।

अथ शङ्कराभरणः ।

वेलावल्याः स्वराः प्रोक्ताः शङ्कराभरणे बुधैः ॥ ८६ ॥

[ इति शङ्कराभरणः ।

अथ वड़हंसः ।

वड़हंसे स्वरा ज्ञेयाः कर्णाटसदृशा बुधैः ॥ ६० ॥

[ इति वड़हंसः ।

अथ विभासः ।

ललितावद्विभासस्तु ६१

[ इति विभासः ।

अथ रेवा ।

रेवा गुर्ज्जरीवत् सदा ॥ ६२ ॥

[ इति रेवा ।

---

वेलावल्याः वेलावल्याख्यरागिण्या बुधैः पण्डितैर्ये स्वराः पूर्व्वमुक्ताः शङ्कराभरणेऽपि ते स्वरा ज्ञेयाः । ८६ ।

कर्णाटे ये स्वराः पण्डितैरुक्ताः वड़हंसेऽपि ते स्वरा ज्ञेयाः । ६० ।

विभासस्य स्वरविन्यासः ललितावज्ज्ञेयः । ६१ ।

गुर्ज्जरीवत् स्वरविन्यासः रेवायां बोद्धव्यः । ६२ ।

अथ कुड़ाई।

देशाख्यसदृशी ज्ञेया कुड़ाई सर्व्वसम्मता ॥ ९३ ॥

[ इति कुड़ाई।

अथाभीरी।

कल्याणरागवज्ज्ञेया बुधैराभीरिका सदा ॥ ९४ ॥

[ इत्याभीरी।

मालश्रीर्जयतश्रीश्च धनाश्रीर्मोहिका तथा।
येषां श्रुतिस्वरग्रामजात्यादिनियमो नहि।
नानादेशगतच्छाया देशीरागास्तु ते स्मृताः ॥ ९५ ॥

इतिश्रीलक्ष्मीधरसूनुचतुरदामोदरविरचिते सङ्गीतदर्पणे
द्वितीयो रागाध्यायः।

---

सर्व्वेषां सङ्गीतज्ञानां मते कुड़ाईरागिण्याः स्वरग्रामः देशीसदृशो ज्ञातव्यः। ९३।

आभीरिकायां कल्याणवत् स्वरग्रामो ज्ञातव्यः। ९४।

येषां रागाणां श्रुतिस्वरग्रामादिनियमो नास्ति परन्तु नानादेशगतच्छाया यत्र लभ्यते ते देशीरागा ज्ञातव्याः। ९५।

*Printed by I. C. Bose & Co., Stanhope Press, 249, Bow-bazar Street, Calcutta.*